ॐ

शुक्ला ब्रह्म विचार सार परमामाद्यां जगद्व्यापिनीं।
वीणा पुस्तक धारिणी मभयदां जाड्यान्धकारपहां।
हस्ते स्फाटिक मालिकां विदधतीं पद्मासने संस्थितां।
वन्दे तां परमेश्वरीं भगवतीं बुद्धि प्रदां शारदाम्॥

ओ३म्

# गर्भाधानादि संस्कार विधिः ॥

अथवा - प्राधान्यात्

# उपनयनविधिः ॥

संस्कर्त्तृ सगृहीतोपयुक्तानुरूप श्रुति स्मृति मूलोपोद्घातपरिष्कृतः
राजकीयपाठशाला मुख्याध्यापक कल्लेत्युपाह्व
पण्डितनाथरामशास्त्रि संस्कृतः शोधितश्च ॥

सोऽयम्
पंडित माधवराम - केशवरामाभ्यां श्रीनगरान्तर्वर्ति
कोठीबागान्तरे स्वकीय मार्कण्टायल मुद्रणालये
मुद्रितः प्रकाशितश्च विक्रम संवत १९९३

# शुद्धिपत्रम् ।

कृपा करके यह शुद्धियां अपनी २ पुस्तक पर उस २ स्थान अपनी कलम से पहिले ही करदेवें, फिर पुस्तक को उपयोग में लायाजावे इति प्रार्थना ॥

| पृष्ठ | पंक्ति | अशुद्धि | शुद्धि | पृष्ठ | पंक्ति | अशुद्धि | शुद्धि |
|---|---|---|---|---|---|---|---|
| १ | ३ | स्नता | स्नाता | ८ | १० | मन | मना |
| २ | २ | सध्यो | सन्ध्यो | ८ | १४ | द्धा | द्धो |
| ४ | १३ | यान्त | यन्ति | १० | ४ | श्चचान्न | श्चान्न |
| ७ | १ | मधा | मेधा | १२ | १४ | न्दाभ्येः | न्दोभ्यः |
| ७ | १० | चितिः | चित्तिः | १३ | १४ | तृस्या | तृभ्यः |
| ७ | १३ | र्मित्र | न्मित्र | १५ | १३ | दुर्गागाः | दुर्गायाः |
| ७ | १३ | मेन | मेना | १७ | ७ | इन्द | इन्द्र |
| ८ | ३ | श्रात | श्राता | १९ | ८ | मार्ति | पर्ति |
| ८ | ३ | सोम | सोमा | २० | ७ | वरं | वेरं |
| ८ | ६ | श्रात | श्राता | २३ | ६ | ह्मन् | ब्रह्मन् |
| ८ | ६ | सोम | सोमा | २६ | ७ | द्रस्तो | द्वास्तो |

| पृष्ठ | पंक्ति | अशुद्धि | शुद्धि |
|---|---|---|---|
| २५ | ११ | वायवे | वायव्ये |
| २८ | १३ | व्वालै | व्यालै |
| ३२ | ९ | मृत | मृतं |
| ३४ | १० | सदा | सुदा |
| ३४ | १० | चितिः | चित्तिः |
| ३४ | १४ | छ्रबा | छ्रया |
| ३५ | ६ | तया | त्वया |
| ३६ | १३ | श्रृणीहि | श्रीणीहि |
| हव्याय त्वा - हव्ये सीद इत्यपि पाठः | | | |
| ३९ | १४ | परिववर्ज इत्यपि | |
| ४२ | १३ | मृ ो | मृगो |
| ४६ | ४ | सचे | सची |
| ४६ | ७ | त्तत | त्तथ |
| ४६ | १० | ञ्चिः | ञ्चिर |
| ५१ | ६ | दत्तात्तेन | ददातु तेन |

| पृष्ठ | पंक्ति | अशुद्धि | शुद्धि |
|---|---|---|---|
| ५२ | ८ | चत्त | चत्ता |
| ५४ | १ | पद्मकेसरं वालुकं (मुष्कबाला) | शंखपुष्पकं शंखाहोली |
| ५५ | १ | शिचति | शिचते |
| ५५ | ४ | अग्नी | अग्नि |
| ५७ | ७ | सनु | सानु |
| ५८ | ९ | काशो | काश |
| ६० | १२ | अयमागात् | आयमगात् |
| ६३ | ४ | चितोति | चिनोति |
| ६४ | १० | बधिर | बदर |
| ६६ | ८ | उच्छ्रियान् | उ श्रेयान् |
| ६७ | ९ | प्राण | प्रण |
| ७१ | ७ | सुष्वप्सी | सुषुप्सी |
| ७२ | ३ | आणीस्थ इत्यपि | |
| ७४ | १४ | विषय | विषये |

| पृष्ठ | पंक्ति | अशुद्धि | शुद्धि |
|---|---|---|---|
| ७५ | ५ | ब्राह्म | ब्रह्म |
| ७७ | ९ | त्रं | त्र |
| ७७ | १० | हातु | होतु |
| ७९ | ७ | भेत्ता | भैत्त |
| ८४ | ७ | जूत | जूतो |
| ८६ | १३ | रङ्गा | रङ्खा |
| ८६ | १३ | बम्वा | बम्भा |
| ८६ | १४ | द्योस्याः | द्योस्या ऽऽ |
| ८७ | १ | सम्‌ृ | संमृ |
| ८७ | ६ | सामिधि | समेधि |
| ८७ | ८ | बृहाति | बृहते |
| ८७ | ८ | वेदासि | वेदसे |
| ९० | १२ | आादित्या | आदित्या |
| ९१ | ५ | व्यचा | व्यचाः |
| ९२ | ६ | वीये | वीतये |
| ९९ | १२ | सोम | सोमा |
| १०० | २ | ,, | ,, |
| १०० | १० | छन्दोभ्य श्चातुर्होतृकायेत्याहु-<br>तिद्वयं मनसा नानुमंत्रयेत् | |
| १०४ | ९ | गायत्रीं छन्दः प्रविशामीत्या-<br>दिषु प्रायश्चेन हीनश्छकारः | |
| १०६ | ४ | सुमतिम | सुमतिर |
| १०६ | ६ | न्तामि | न्तमे |
| १०६ | १२ | चत्तु | श्चत्तु |
| १०७ | ३ | रुद्रायाः | रुद्राया |
| १०८ | ५ | सन्दशे | सन्दशि |
| १०९ | १३ | आपो | अपो |
| ११२ | १३ | सदे | सन्दे |
| ११३ | ९ | च्छिद्रं | छिद्रं |
| ११४ | ५ | वायुना | वयुना |

| पृष्ठ | पंक्ति | अशुद्धि | शुद्धि |
|---|---|---|---|
| ११५ | ८ | याण | यण |
| ११८ | १४ | दंव | दैव |
| १२२ | १३ | ष | षं |
| १३३ | १० | न्ता ात | न्तीति |
| १३८ | ६ | अयमा | आयम |
| १४१ | १२ | सृजं | सिचामित्यपि |
| १४१ | १४ | श्वेता | श्वेत्ता |
| १४२ | ४ | नाम | नामा इत्यपि |
| १४२ | १० | रन्तु | रन्नु |
| १४८ | ६ | पर्कः २ | पर्कः |
| १५१ | ११ | प्रत | पृत |
| १५६ | ४ | यदी | यद्दी |
| १५८ | ६ | स्विष्टि | स्विष्ट |
| १६३ | ६ | औषजः | औशिजः |

उपोद्धात के सूक्ष्माक्षरों का शुद्धि पत्र—

| | | | |
|---|---|---|---|
| १ | ११ | पुष्य | पुष्प |
| १ | १२ | तान्नः | तान्तः |
| २ | १ | मक्त्यो | मनूक्त्यो |
| ३ | १३ | सवत् | संवत |
| ५ | १ | निवृत्य | निवृत्त्य |
| ५ | ६ | दसमे | दशमे |
| ६ | १६ | याति | याति तदापि |
| ७ | ३ | पुण्याह | पुण्याहे |
| १० | १६ | व्रतता | व्रता |
| १५ | ५ | तद्वादो | तद्वोदा |
| १६ | ३ | वदाः | वेदाः |
| २७ | १० | गात्रजो | गोत्रजो |
| २८ | ८ | रञ्जुः | रज्जुः |

ॐ

ॐ नमो नारायणाय ॥

प्रकृतग्रन्थप्रास्ताविकोपयोगि किञ्चिदुल्लिख्यते ॥

इह खलु स्वाध्यायोऽध्येतव्य इति, ब्राह्मणेन निष्कारणो धर्मः साङ्गो वेदोऽध्येतव्य इति, स्वाध्यायेन व्रतैर्होमैरिति, यथा काष्टमयो हस्ती यथा चर्ममयो मृगः । यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति इति, तथा विप्रोऽनृचोऽफल इति, वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना । वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते इति, योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वय इत्यादिश्रुतिभिः स्मृतिभिश्च मुक्तकण्ठमवाघुषितमुद्घुषितं च, आचार्यमुपगम्य तच्चरणसंवहनादिना तद्दयास्पदीभूतस्य द्विजमात्रस्य स्वाध्यायाध्ययनमत्यन्तमावश्यकम् ॥

नाविदितं चैतन्निगमकल्पलतापुष्पभ्रमरायमाणानां तज्ज्ञानज्योत्स्नानिर्धूतान्तःस्थान्धतमसानां निपुणं निरूपयतां पण्डितधुरन्धराणाम् । यत् 'कृतोपनयनस्यास्य व्रतादेशनमिष्यते, ब्रह्मणो ग्रहणं चैव क्रमेण विधिपूर्वक-

मित्यादिमनूक्त्योपनयनसंस्कारमन्तरा द्विजात्मजो नार्हति तत्स्वाध्यायाध्ययनम्, नचासंस्कृतः सन्ध्यावन्दनादिरहितत्वात्कस्मिंश्चिदपि वेदविहिते दैवे यज्ञादिकर्मणि, पित्र्ये वा श्राद्धादिकर्मणि लभतेऽधिकारम् ॥

नच द्विजबालानां विनोद्दिष्टसंस्कारैः—"आचार्यस्त्वस्य यां जातिं विधिवद्वेदपारगः । उत्पादयति सावित्र्या, सा सत्या साऽजराऽमरा,, इत्यादि स्मार्तवचनप्रामाण्याद् द्विजत्वमेव संगच्छते । नचापि संस्कारविहीनस्य बैजिकगार्भिकैनःशुद्धिः सम्भवति । नचैषामार्यविगर्हितः कालातिक्रमोऽपि व्रात्यत्वापादकः प्रायश्चित्तीयत्वविधानात्पराङ्मुखः ॥

एवं च गर्भाधानादारभ्य सीमन्तोन्नयनादयो गर्भसंस्कारा जातकरणादयोऽन्ये चान्तःकरणोन्मार्जका इति सर्वे चतुर्विंशतिः संस्कारा यावन्न विधीयेरन्, तावच्छाणानुल्लीढः पाषाणबुद्धिनिरस्तमणिभावो मणिरिवासंस्कृतो द्विजबालः सुवंशोत्पन्नोऽपि कर्मानुपयुक्तशरीरो मोक्षरूपेण वेदज्ञानफलेन दूरतो धिक्कृतो न शोभामावहति । नच वैदुष्यमाप्य विद्वन्मण्डल्यन्तर्गतो ज्ञानगोष्ठीसुखमनुभवितुमनुभावयितुंवा पारयति, इत्येतावदेव पर्याप्तं

द्विजत्वप्राप्तये द्विजबालानां संस्काराणामावश्यकत्वे ॥
ते चैते संस्काराः शुद्धस्योपनयनसंस्कारविधिपुस्तकस्य सत्त्व एव याज्ञे कर्मणि सुप्रयुक्ता भवितुं शक्नुयुरित्याशया चिरन्तन्या व्याप्तः, पंडितमाधवराम केशवरामयोर्यन्त्रालयाधिपत्योः सम्प्रार्थनया प्रेरितश्चाहमस्य पुस्तकस्य यथामति शोधनाय भगवत्कृपाधारः प्रयतिष्ये ॥ क्षीरनीरविवेककुशला हंसा इव निर्मत्सरा ब्राह्मणोत्तंसाः पुस्तकस्यास्य स्वीकारेण मदीयं प्रयासमवलोक्य मां मुद्रकावपि कृतार्थयन्तु, इत्याशासे—राजकीय पाठशालामुख्याध्यापकः काश्मीरदेशाभिजनो गणेशघाट्टवास्तव्यः कल्लेत्युपाह्वो **नाथरामशास्त्री** ,,
अत्र पण्डितटीकारामशास्त्रिवर्यः पुस्तकार्पणेन प्रशस्यकार्यकारित्वाद्धन्यवादार्हः तन्त्रतारकावतंसस्य पण्डित—ईश्वरचन्द्रस्य पौत्रः, पण्डितराजेश्वरस्य पुत्रः पं०वागीश्वरोऽपिपुस्तकार्पणेन प्रशस्यतरः ॥ पण्डित प्रकाशजुवचन्द्र पौत्रेण पं० भास्करचन्द्रेणापि पुस्तकदानेनात्र विषये सहायो दत्तः ॥
संवत् १९६३ वैशाखमासः ॥

त्र्यायुषम्— त्रयाणां बाल्यादीनामायुषां समाहारः— त्र्यायुषम् जमदग्न्यादीनां यादृशं बाल्यादिषु चरितं तादृशं नो भूयादिति ॥

प्रस्तुतचतुर्विंशतिसंस्कारानुगतं किञ्चिन्मात्रमत्र प्रस्तूयते—

१. बीजवापनम्—

षोडशाहर्त्रृतुः स्त्रीणां तस्मिन्युग्मासु संविशेत् ।
ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत् ॥ १ ॥
चित्रकर्म यथानेकैः रङ्गैरुन्मील्यते शनैः ।
ब्राह्मण्यमपि तद्वत्स्यात् संस्कारैर्विधिपूर्वकैः ॥ २ ॥
गार्भैं र्होमै जातकर्मचौडमौञ्जिनिबन्धनैः ।
गार्भिकं बैजिकं चैनो द्विजानामपमृज्यते ॥ ३ ॥

२. सीमन्तकरणम्—

सीमन्तं कारयेतेति - विद्वानपि सीमन्तोन्नयनसंज्ञया यौगिक्या प्रसिद्धं यत्संस्कारकर्म तत्कारयेत, न तु स्वयं कुर्यादिति णिच् प्रयोगः ॥ इदं कर्माधारस्यैव ॥ यो गुरुस्तमर्हयेत् इति - यो गुरुर्होमकर्ता मातुलादिस्तमर्हयेत् योनिसंबद्धं कंचिदेतत्कर्म कारयेत् न त्वृत्विङ्मात्रम् । एतदेवात्रैव काले वाग्दत्तानां कुमारीणां सटोद्धरणं - केशरचनाविशेषात्मकम् । अत्रैवानुलेपनं–सीमन्तशोभाधायि । अथवा, अत्रैवानवलोभनं गर्भरक्षार्थमन्यगृह्योक्तं कार्यमिति प-

श्चिकायाम् ॥ गर्भपातनिवृत्त्यर्थं संस्कारोऽनवलोभनमिति ॥ स्त्रियो ह्यापद्ग्रस्ता एकवेणीधराः प्रायो वर्तन्ते, अस्य तु संस्कारस्योत्सवसम्बद्धत्वात् स्त्रीणां शमीशाखादिना सीमन्तविचयः [प्रसाधनम्] पृथक् केशपक्षसन्नाहो, नीललोहितेन सूत्रेण वेणीद्वयग्रन्थनं चेति त्रीणि कर्माणि मन्त्रैर्विधेयानि ॥

३. पुंसवनम्—

भूयिष्ठगतेषु इति—दशमे मासि सूतवे इति श्रुतिदर्शनाद्गर्भमासा दश, तत्र पञ्चार्धभागः। भूयिष्ठः सप्तमो गतो येषां तेष्वष्टमे मासि इति शिष्टाचारात् ॥

यत्रैकः स्थालीपाकस्तत्र देवताभेदेऽपि एककर्म। द्रव्यदेवतासंयोगस्यैक्यात्। इह तूभयभेदात्संयोगभेदेन कर्मबहुत्वम् ॥ अत एवाग्नये- इन्द्राय- विष्णवे-इति देवताभेदेन भिन्नेषु स्थालीपाकेषु निर्वपणादि ॥

४. जातकरणम्—

दुहितरि न होमो, नाम तु क्रियतेऽमन्त्रकम्, सशिरस्कं स्नपयित्वेति पुंल्लिङ्गनिर्देशात् ॥ नाभिवर्धनादनन्तरं नामधीयते।

वैदिकैः कर्मभिः पुण्यै र्निषेकाद्यैर्द्विजन्मनाम्।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥ १ ॥
स्वाध्यायेन व्रतै र्होमैस्त्रैविद्येनेज्यया सुतैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥ २ ॥

गार्भैर्होमैर्जातकर्म चौडमौञ्जिनिबन्धनैः ।
गार्भिकं बैजिकं चैनो द्विजानामपमृज्यते ॥ ३ ॥

जातकर्म कृत्वा नामकरणम्, नाम्न आदौ घोषवदक्षरम्, मध्येऽन्तः-स्थाक्षरम्, यथोपपत्ति वा— देवताप्रसादलब्धत्वादिना वा ॥ स्वस्त्ययनं– अविनाशप्रापणं ॥ वाचयतीति पुरोहितेन । स्वयं ज्ञातृत्वे तु स्वार्थेऽत्र णिच् ॥

५. नामकरणम्--

दशम्यां रात्रौ व्युष्टायां व्यतीतायां एकादश्यां द्वादश्यां वाऽशौचशुद्धौ यस्मिन्नग्नौ जातकरणं कृतम्, तस्मिन्नेवाग्नौ सूतिकागारस्थे सूतकाग्नौ स्थालीपाकं श्रपयेत् । यावच्छिशोर्गृहान्निष्क्रमणं न कृतं तावदन्यत्रायुक्तम् ॥

तदेव नामधीयतेऽन्यदित्येक –अत्रानुवाकेऽसावित्यस्य स्थाने तदेव नामधीयते यज्जातकर्मणि कृतं नान्यत् ॥ एके पुनराहुः– अत्रान्यन्नाम निधीयते । द्वे हि नाम्नी ब्राह्मणस्य कर्तव्ये तत्र यद्रहस्यं जातकर्मण्युक्तं "पुत्रे जाते नामधीयत, इति । तस्य प्रयोजनं परैरभिचारे क्रियमाणेऽनुच्चारात् । प्रकटं त्वेकादशादौ व्यावहारिकम् ॥ निघ्राप्येति पाठे स्वार्थे णिच् शिङ्घनं कृत्वेत्यर्थः ॥ पित्रसन्निधौ मातरं प्रयुज्येति केचित् । ऋत्विग्वा पितुः प्रयोजको विवक्षितः ॥ (एवमत ऊर्ध्वं विप्रोष्य) नामकरणादूर्ध्वं यदा प्रवासात्पिताऽऽयाति तदापि पिता शिरसि शिङ्घेत् ॥

६. सूर्यदर्शनं--

जन्मनः प्रभृति तृतीयमासस्यार्धमासे व्यतीते बाल आदित्यस्य दर्शनं पुण्याहे कारयितव्यः । बालं सम्मुखमुत्संगे कृत्वा बालपित्रा परंब्रह्मरूपत्वेन सर्वमयत्वादादित्यः स्तूयते ।

७ चन्द्रदर्शनम्—

चतुर्थे मासि कर्तव्यं शिशोश्चन्द्रस्य दर्शनम् ।
द्वादशेऽहनि राजेन्द्र शिशोर्निष्क्रमणं गृहात् ॥ १ ॥

अत्र दक्षिणादर्शापरपर्यायः प्रकाशः । अधिवासो वा, तच्चोत्तरीयं वासः ॥

८. अन्नप्राशनम्—

षष्ठे मास्यन्नप्राशनम्— आज्यमन्नाद्दिकामः । घृतौदनं तेजस्कामः । दधिघृतमधुमिश्रमन्नं प्राशयेत्सर्वकामः इति ।

अलङ्कृतस्य दातव्यमन्नं पात्रेऽथ काञ्चने ।
मध्वाज्यकनकोपेतं प्राङ्मुखं प्राशयेच्छिशुम् ॥ १ ॥

अन्नपते इत्यादि मन्त्रः प्राशने ॥

९. चूडाकरणम्—

अर्धमवधिं कृत्वा सप्तमो मासो भूयान्, अष्टमश्च भूयिष्ठस्तस्मिन्गते नवमे मासीत्यर्थः, इत्याह तृतीयस्य वर्षस्य भूयिष्ठेषु गतेषु चूडाः कारयते इति-

विदुषाऽपि स्वयं न कार्यमिति णिचा दर्शितम् । दक्षिणे शिरोभागे कपुजाः [ चूडाः ] वसिष्ठगोत्रजानाम् । उभयतो ( दक्षिणोत्तरभागयोः ) अत्रिकश्यप-गोत्रजानाम् । मुण्डाः ( निःशिखाः ) भृगुगोत्रजाः । पञ्चचूडाः ( चतुर्दिक्षूर्ध्वं च ) आङ्गिरोगोत्रजातानाम् । एके चाङ्गिरसानां वाजि— केशपङ्क्तिमिच्छन्ति ॥ अन्येऽगस्त्यविश्वामित्रादिगोत्रजा मङ्गलार्थं शिखिनो भवन्ति ॥ निःशिखत्वं हि अमङ्गलमनिष्टहेतुः ॥ तथा च पठन्ति— अमेध्यमेतच्छिरो यदशिखमिति । यथा कुलधर्मं वा — कुलधर्मानतिक्रमेणैवैकशिखत्वादि कर्त्तव्यम् ॥ कुलाचारो हि परो धर्मः ॥

दर्भक्षुरकर्म कर्तव्यमृत्विजा इति शेषः ॥ सुहृत्परिग्राह्यानुप्यमानान्समवचि-नोति — सुहृदा पतन्तः केशा ग्राह्या इति हि नियमः । हारितगोमयेन मिश्रीकृत्य पिण्डीकरोतीति कचिदाचारः ॥

१०. उपायनम्—

॥ सप्तमे वर्षे० इति ॥ जन्मनः प्रभृति सप्तमे वर्षे गर्भादष्टमे ब्राह्मणस्यो-पायनमाचार्यसमीपगमनं मेखलाबन्धनसंस्कारः प्रधानभूतः । तस्मिन्हि सति श्रुतिस्मृत्यधिकारो भवति । यतोऽनेन द्वितीयजन्मत्वं स्मर्यते ।

प्रथमं मातृतो जन्म द्वितीयं मौञ्जिबन्धनात् ।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥ १ ॥

१० सप्तदशे तु प्राप्तेऽतिक्रमः। अतिक्रमे हि प्रायश्चित्तम्—

येषां द्विजानां सावित्री नानूच्येत यथाविधि ।

तांश्चारयित्वा त्रीन्कृच्छ्रान्यथाविध्युपनाययेत् ॥ इति ॥

मेखला— मेहनसम्बन्धिनः खस्य मालेति निर्वचनं कुर्वन्ति ॥ मयूरव्यंसकादित्वात्साधुः ॥ मिह्यते सिच्यते वीर्यादिकमनेनेति मेहनमानन्देन्द्रियं । तस्योपरि नाभेरधो यत् खमाकाशस्तस्य मालेति मेखला ॥ बद्धायां ह्यस्यां वाक्पाणिपादचापलस्य नियमचोदनया वारणात् 'यतो मा स्खल सत्यादिति' — नियमादिति मेखला ॥ अथवा, मेखो — मोहस्तं लाति— धारणया निगृह्णाति इति मेखला ॥ अत्रिः ॥ दक्षिणं पाणिमुद्धृत्य प्रकाममभिवादयेत्। श्रोत्रिये त्वञ्जलिः कार्यो गुरोः पादोपसंग्रहमित्युपसंग्रहणं केवलं गुरुविषयम् ॥

अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरःप्लुत इति । प्रत्यभिवादने गुरुणाभिवादकस्य नाम्नोऽन्तेऽकारः प्लुतो वाच्यः, इत्यन्वयः । अत्राकारग्रहणमन्तिमस्वरोपलक्षणार्थम । ततश्च य एवास्ति अन्त्यः स्वरः स प्लुतः कार्यः, ततश्च पूर्वाक्षर इति विशेषणोपादानाद्व्यञ्जन सहित एव स्वरः प्लवनीयः। न पुनरपूर्वोऽकारो नामान्ते विधीयते इति । [ किं विशिष्टोऽन्त्यः स्वरः प्लवनीयः इत्याह पूर्वाक्षर इति । पूर्वाक्षरविशिष्टः, न तु केवलः, पूर्वमक्षरं च स्वरसामर्थ्याद्व्यञ्जनमेव ज्ञेयमित्याशयः ] ॥ अप्रगृह्यं सन्ध्यक्षरं तु क्रमेण आ, इ, भावं आ, उ,

भावं च प्राप्नोति, यथा यज्ञभूता ३ इ । देवबन्धा ३ उ इति ॥

अनुप्रवचनीयसंज्ञका हि होमाः । अनुप्रवचनं प्रयोजनं येषां ते । अनु-उत्तरकालं हि सावित्र्याः प्रवचनं ब्रह्मचारी कारयिष्यते गुरुणा ॥ अत्र मन्त्रानुपाध्यायो वक्ति. शिष्योऽनुप्रब्रवक्ति ॥

पालाशं दण्डं, एकसरं--अवान्तरशाखारहितं सत्वचमव्रणमृजुं गुरुः स्वहस्तेन परिगृह्य तस्य छायायां शिष्यमवस्थाप्य पाठयति ॥ तत्र दण्डस्य कार्यमवलम्बनं गवादिनिवारणमप्सु प्रवेशनं तमोऽवगाहनमित्यादि ॥

अजिनोपवीतमेखलादीनामदृष्टम् इति ॥

पालाशं दण्डं ब्राह्मणाय प्रयच्छतीति पुनः पालाशग्रहणात्क्षत्रियवैश्ययोरपि पालाशच्छायायामेवावस्थितयोर्वाचनं न प्रातिस्विकच्छायागतयोरिति ॥ दानं पुनरश्वत्थवटयोर्वाचनं तु पालाश इति भावः ॥

प्रयच्छतीति—ब्रह्मचारिणोनुप्रवचनान्ते आचार्यः प्रयच्छति ॥ अत्र यमः-एतेषामप्यलाभे तु सर्वेषां सर्वे यज्ञियाः इति ॥

स्मृतं च मेऽस्मृतं च मे--मन्वादिभिरनुष्ठेयत्वेन यदुक्तं, यच्चास्मृतं-वर्जनीयत्वेनोक्तं तदुभयव्रतमवश्यं पालनीयमेवं सर्वत्र ॥

प्रागुपनयनात्कामचारः, कृतोपनयनस्यास्य व्रतान्यादिश्यन्ते, अत एव व्रतशिक्षाद्यारम्भः । उपनयनं गुरुसमीपप्राप्तिस्तदनन्यत्वप्राप्तिश्च, वेदाध्ययनान्तं च

व्रतनियमाः शास्त्रोक्ताः ॥

सन्ध्या

उत्तमा दृष्टसूर्या च मध्यमास्तङ्गते रवौ ।
अधमा दृष्टतारा च सायं सन्ध्या त्रिधा मता ॥ १ ॥
उत्तमा दृष्टतारा च मध्यमाभ्युदिते रवौ ।
अधमा दृष्टसूर्या च प्रातः सन्ध्या त्रिधा मता ॥ २ ॥
यस्मात्सम्यगत्र ध्याने मनो लीयेत सर्वतः ।
तस्मात्सन्ध्येति लोकेषु ख्याता देवि भविष्यति ॥ ३ ॥
शिवशक्त्योः समायोगो यस्मिन्काले प्रजायते ।
सा सन्ध्या कुलनिष्ठानां समाधिस्था प्रजायते ॥ ४ ॥
अङ्गुष्ठानामिकाभ्यां तु यन्नासापुटधारणम् ।
प्राणायामः स विज्ञेयस्तर्जनी-मध्यमे विना ॥ ५ ॥

मूत्रोच्चार० अत्र सर्वथा सूर्यादिसांमुख्यं वर्ज्यम्, तथा चान्यत्र—'सूर्यस्य पृष्ठे दक्षिणे वा स्थितत्वेनासांमुख्यात्, ध्रुवारुन्धत्योश्चासाम्मुख्यात्, ॥

कुक्कुटाण्डप्रमाणं तु ग्रासमाहुर्मनीषिणः । तथा चैवाहुतिश्चाग्नौ शौचार्थे चैव मृत्तिका ॥ इति ॥ मृत्तिकावर्णोपदेशस्तु प्रातिस्विकगुणानुरूप्येण ॥

ब्रह्मचर्यकालो द्वादशवर्षादि युगानुरूपः । शक्तिप्रज्ञाव्यवसायाद्यपेक्षया वा ।

नैष्ठिकापेक्षयात्राष्टाचत्वारिंशद्वर्षाण्यध्ययनं वेदस्य बोध्यम् ॥ अग्नीन्धनं-प्रातर्यदग्निसमिन्धनमस्यावश्यकतयोपदिष्टं तदादित्योदयात्प्रागेव कर्तव्यम् । सायमप्यस्तमयात्पूर्वमेव ॥

११. त्रैविद्यकम्

त्रैविद्यकम्-तिसृषु विद्यासु वेदत्रयात्मिकासु भवं व्रतम् । वेदत्रय्यध्ययनार्थमित्यर्थः । आख्यातं च ब्रह्मचर्यव्रतं वेदाध्ययनार्थमेव । तच्चोपदेश्यस्याप्रबुद्धत्वादाचार्येणैव कारयितव्यम् ॥

१२. उपाकर्म

उपाकर्म-स्वीकरणं मनसा संकल्पनमेतत्स्थानकविशेषादिकमुपवेदरूपं मयास्मै शिष्याय प्रवक्तव्यामिति । शिष्यो हि शिल्पाङ्गोपाङ्गादिपरिज्ञानाय गुरौ वसन् तदपि गुरोः सकाशादधीते ॥ उपाकरणं चास्य होमस्य नाम ॥ तच्च-संस्कार पूर्वं ग्रहणं स्यादुपाकरणं श्रुतेरिति ।

श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान् ॥ १ ॥

१३. चातुर्होतृकम्

चातुर्होतृकम्- चित्तिः स्रुगित्यादयश्चतुर्होतारस्तेषु भवं व्रतं चातुर्होतृकम् । अस्य ग्राम्यत्वमेव नारण्यत्वं, अविशेषेण च वेदव्रतत्वं सर्वेषाम् ॥ तथा च गौतमः प्राह-चत्वारि वेदव्रतानि चतुर्होतारः शुक्रियोपनिषदरुणानि ।

भक्त्या ब्रह्म विवर्तं वा परिणाममुपाश्रितान् ।
आध्यात्मिकैकरूपांस्तांश्चतुर्होतॄन् नमाम्यहम् ॥ १ ॥

चतुर्णां धर्मार्थकाममोक्षाणां होतारो जुह्वति , ददतीति दातारश्च चतुर्होतारः प्रद्युम्नानिरुद्ध विष्णुसंकर्षणाः प्रथमो विवर्तः ॥ तथा च ब्राह्मणम्-ब्रह्मैव चतुर्होतार इति

१४. चातुर्होतृकापवर्गः

अत्रापवर्गश्च व्रतसमाप्तिः ॥

१५. प्रवर्ग्यव्रतम्

अथारण्यव्रतानि प्रवर्ग्यव्रतादीनि । अत्र रहस्यमन्त्रप्रयोगो ग्रामस्यासन्निकाशेऽग्निं प्रज्वाल्य विधीयते ॥

१६. प्रवर्ग्यव्रतापवर्गः

एवमेवैतदपवर्गश्च, उष्णीषबन्धनव्याजाद्गुरुर्व्यावृत्य बाह्यतः । अन्तर्मुखं करोत्येव शिष्यं मन्त्रांश्च तादृशान् । पृथिवी शान्तिरित्यादीन्पाठयत्यग्निसन्निधौ ॥ करणबहिःप्रसररोधोऽन्तःस्थचित्सूर्यप्रकाशसम्मुखीकरणाय ॥ बुद्धीन्द्रियाश्रय—मुखाच्छादनाय नेत्राच्छादनम् ॥ उष्णीषेण तेजः, कन्यादर्शनेन प्रजां, वत्सेन पशून्, आदित्येन ब्रह्मवर्चसं, क्षीरौदनेनान्नादि अधिगच्छति । अतस्तेजस्वी प्रजावान् पशुमान् ब्रह्मवर्चस्वी अन्नादो भवति ॥

कन्या मुक्तिरिति प्रोक्ता वत्सो धर्मस्तथैव च ।
आदित्यो ब्रह्मरूपोऽत्र क्षीरान्नं ब्रह्मवर्चसम् ॥ १ ॥

एतेषां दर्शनं नित्यमुत्तमं वनवासिनाम् ।
कथितं शास्त्रतत्त्वज्ञै ब्रह्मसायुज्यकाङ्क्षिणाम् ॥ २ ॥

१७. अरुणव्रतम्

रुद्रमन्त्राध्ययनकालेऽरुणव्रतहोमः ॥ आपमापमित्यादयो मन्त्राः परमरहस्या, औपनिषदाः पावना घोरसंसारसागर सन्तरणोपायाः प्रायः सर्वत्र समर्थाः, प्रवर्ग्य-व्रतेऽपि शान्तिप्रस्तावोपयोगिनः ॥ आपमित्यादिनाऽपः पात्रे निधायोपस्तौति ॥

१८. अरुणव्रतापवर्गः

एवमस्यापवर्गोऽपि ॥

१९. औपनिषदव्रतम्

उपनिषदध्ययनकाले औपनिषदव्रतहोमः । अथोपनिषदर्हाः–ब्रह्मचारी सुचरिती मेधावी कर्मकृद्धनदः प्रियो विद्यया विद्यामन्विच्छंस्तानि तीर्थानि ब्रह्मणः ॥

२०. श्रीकामः

श्रीविहीनेन सत्त्वशुद्ध्यर्थं यागाद्यनुष्ठातुं न शक्यते– इति श्रीकामहोमोऽपि परम्परया ब्रह्मविद्योपयोगीति ॥

२१. यशस्कामः

ब्रह्मविद्याप्राप्त्यैव यशोलाभाय यशस्कामहोमः ॥ अखिलं हि कर्मोपात्त-दुरितक्षयार्थं, ततश्च ज्ञानोत्पत्तिः । अनन्तरमेव यशोलाभः । तदुक्तम्—

ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।

यथादर्शतलप्रख्ये पश्येदात्मानमात्मनि ॥ १ ॥

२२. औपनिषद्व्रतापवर्गः

एवमपवर्गे औपनिषदं व्रतम् ॥

२३. गोदानम्

आरण्यव्रतसमाप्तौ च गावः केशा दीयन्ते खंड्यंते यत्र तद्गोदानम् । अत्र च केशान्त समावर्तनशब्दौ पर्यायौ । यस्त्वरितं दारस्वीकारार्थी तस्य जन्मनः प्रभृति षोडशे वर्षे स्नातस्य दारकर्मोच्यते । त्वराभावे तूपनयनादारभ्य षोडशे वर्षे गोदानम् ॥

२४. त्रैविद्यकापवर्गः

पूर्वारब्धस्य वेदत्रय्यध्ययनव्रतस्यापवर्गः समाप्तिस्त्रैविद्यकापवर्गे क्रियते वेदाध्ययनं च समाप्यते । अथ छन्दस्यर्थान्बुद्ध्वा गां कारयेदाचार्यमर्हयेदिति स्नानव्रतमन्त्रेषूक्तम् । अत्र वेदार्थान् ज्ञात्वा दारपरिग्रहार्थं स्नातकधर्ममिच्छन्नाचार्यं गां-मधुपर्कं स्वधनं दत्त्वाऽऽहारयेत । आचार्यो हि शिष्याय सिस्नासवे मधुपर्कं ददाति । शिष्यश्चाचार्याय दक्षिणाम् ॥

अन्ये तु वाक्यद्वयेनेति कथयन्ति-आचार्येण शिष्याय मधुपर्को देय इति आचार्यपूजितश्च गृहीतदक्षिणः स आचार्यमर्हयेत् इति ॥

केचित्तु दण्डाद्यग्नौ प्रास्य ब्रह्मचारी एवाचार्यं मधुपर्केणार्हयेत् इति ॥

१ (क) किं नाम यज्ञोपवीतम्— "यज्ञाख्यः परमात्मा य उच्यते चैव होतृभिः । उपवीतं यतोऽस्याप्त्यै तस्माद्यज्ञोपवीतकमिति" – 'विष्णुर्वै यज्ञः, इति श्रुत्या यज्ञरूपस्य विराजः सगुणस्य परमात्मनः प्राप्तये मुख्यं साधनं यत्तद्यज्ञोपवीतम् ।। अथवा यज्ञे संस्कृतं यज्ञसंस्कृतं, यज्ञसंस्कृतं च तदुपवीतं नवसूत्रात्मकं चिह्नं यज्ञोपवीतम्, मध्यपदलोपसमासः ।। अथवा— उप समीपेऽर्थाद्गुरोर्वीयते गम्यते वेदाध्ययनार्थं येन सह तदुपवीतम् ॥ एतदेव यज्ञसूत्रमपि कथ्यते ॥ एतद्धारणादेव यज्ञादिकरणायाधिकारो द्विजमात्रस्य ।।
(ख) यज्ञोपवीतहीनेन न कदापि भाव्यम— "सदोपवीतिना भाव्यं सदा बद्धशिखेन च" 'विशिखो व्युपवीतश्च यत्करोति न तत्कृत,मित्यादिना द्विजमात्रस्य यज्ञोपवीत राहित्यं सर्वथा निषिद्धं तद् हीनस्य च सर्वथा कर्मस्वनधिकारः ।। अन्तरैतत्प्रायश्चित्तीयत्वमपि स्मृतिकारा ब्रुवन्ति— विना यज्ञोपवीतेन तोयं यः पिवति द्विजः । उपवासेन चैकेन पञ्चगव्येन शुध्यति ।। विना यज्ञोपवीतेन मूत्रोच्चारकृदप्यसौ । उपवासद्वयं कृत्वा दानै होमैस्तु शुध्यतीति ।।
(ग) कथंब्रह्मसूत्रमिति ।। सूचनाद्ब्रह्मतत्त्वस्य वेदतत्त्वस्य सूचनात् । तत्सूत्रमुपवीतत्वाद्ब्रह्मसूत्रमिति स्मृतम् इति॥ निराकारब्रह्मणोऽप्यधिगमहेतुत्वादिदं ब्रह्मसूत्रमिति विख्याततमम् इत्यतोऽन्वर्थं नाम ब्रह्मसूत्रमिति।। उपर्युक्तं यज्ञसूत्रं तु साकारब्रह्मप्राप्त्यर्थमतः कृतदार उभयप्राप्त्यर्थमुभयमेव धारयति ।।

[घ] सनातनत्वमस्य— ॥ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्— इत्यादिरयं मन्त्रस्तु ब्रह्मोपनिषदि, नारद परिव्राजकोपनिषदि, छन्दोग परिशिष्ट पारस्करगृह्यसूत्रेषु च दृश्यतेऽतोऽस्य यज्ञोपवीतस्यानादित्वं सनातनत्वं च प्रतीयते ॥ यजुर्वेदेऽपि अ० १६ मं० १७ "हरिकेशायोपवीतिने पुष्टानां पतये नमः" इति- अस्मिश्च मन्त्रे 'उपवीतिने' इति पदस्य दर्शनादुपवीतस्यानादिकालात्प्रचारः ॥ वेदाविर्भावकर्तुः स्वयम्भुवोऽप्याविर्भावकालेऽस्यसहजासिद्धत्वाद्वेदेभ्योपि प्राक्कालिकत्वम् ॥ उक्तं च प्रजापतेर्यत्सहजं पुरस्तादिति॥ वैदिकमतानुसारतोप्यनुपवीतस्य वेदाध्ययनानधिकारत्वे, पञ्चयज्ञेषु च वेदपाठस्य मुख्यतरत्वे, वेदस्य ब्रह्मयज्ञ यज्ञाद्यनुष्ठान ब्रह्मज्ञानानामेव प्रयोजनत्वे चास्य वैदिक कालिकत्वं सर्वथा ज्ञायते ॥ इति ॥

२. यज्ञोपवीतस्थानम्—

नाभेरूर्ध्वं मेध्यतरः पुरुषः परिकीर्तितः इति मनुः । पृष्ठवंशे च नाभ्यां च धृतं यद्विन्दते कटिम् । तद्धार्यमुपवीतं स्यान्नातिलम्बं नचोच्छ्रितम् , इति कात्यायनस्मृतौ कर्मप्रदीपे च ॥ एतत्तु तर्हि सुसङ्गतं भवेद्यदि स्वहस्तपरिमाणेनैव कृतं कारितं वा स्यादिति ॥ अतः स्वयमप्यस्य निर्माणे नास्ति कोपि दोषः

३. अस्याकारः, ह्रस्वतादैर्ध्य निषेधश्च—

सिद्धार्थफलमानेन धार्यं स्यादुपवीतकम् । यशोहरमतिस्थूलमतिसूक्ष्मं धनापहम् इति ॥ स्मृतिप्रकाशे— आयुर्हरत्यतिह्रस्वमतिदीर्घं तपोहरमिति ॥

४. यज्ञोपवीत निर्माणविधिः (कात्यायन परिशिष्ट) उपपत्तिश्च— अथातो यज्ञोपवीत निर्माण प्रकारं वक्ष्यामः । ग्रामाद्बहिस्तीर्थे गोष्ठे वा गत्वाऽनध्यायवर्जितपूर्वाह्णे कृतसन्ध्योऽष्टोत्तरशतं सहस्रं वा यथाशक्ति गायत्रीं जपित्वा ब्राह्मण स्तत्कन्यया सुभगया धर्मचारिण्या ब्राह्मण्या वा कृतं सूत्रमादाय भूरिति प्रथमां षण्णवतिं परिमाति । भुव रिति द्वितीयां स्वरिति तृतीयां च ॥ पृथक् पलाशपत्रे संस्थाप्य १ आपो हिष्ठेति तिसृभिः, २ शन्नो देवी रित्यनेन, ३-सावित्र्या चाभिषिच्य वामहस्ते कृत्वा त्रिःसन्ताड्य व्याहृतिभिस्त्रिवलितं कृत्वा, पुनस्ताभिस्त्रिगुणितं कृत्वा पुनस्त्रिवृतं च कृत्वा प्रणवेन ग्रन्थि कृत्वोंकारमग्निं नागान्यमं पितॄन्प्रजापतिं वायुं सूर्यं विश्वान्देवान् नवतन्तुषु क्रमेण विन्यस्य संपूजयेत् ॥ ४ देवस्यत्वेत्युपवीतमादाय, ५ उद्वयमित्यादित्यं दर्शयित्वा ६ यज्ञोपवीतमित्यनेन धारयेदित्याह भगवान् कात्यायनः कृष्णयजुर्वेदाश्रितानामप्येवमेव तत्र प्रदर्शितमस्ति ॥ सामवेदीय छान्दोग्यसूत्र परिशिष्टेऽपि तुल्य एवाशयोऽयं वर्णितोऽस्ति ॥ मदनपरिजातेदेवलः— विधवारचितं सूत्रमनध्यायकृतं च यत् । विच्छिन्नं वाप्यधो यातं भुक्त्वा निर्मितमुत्सृजेत् । भोजनमकृत्वैव नवीनमुपवीतं सम्पादयेदन्यथातूत्सृजेत ॥ शुचौ देशे शुचिः सूत्रं संहताङ्गुलिमूलके । आवेष्ट्य षण्णवत्या तत्त्रिगुणीकृत्य यत्नतः ॥ अध् लिङ्गकै स्त्रिभिः सम्यक् प्रक्षाल्योर्ध्ववृतं त्रिवृत् । अप्रदक्षिणमावृत्तं सा-

वित्र्या त्रिगुणीकृतम् ॥ अधः प्रदक्षिणावृत्तं समं स्यान्नवसूत्रकम् । यज्ञोपवीतं कुर्वीत सूत्राणि नवतन्तवः ॥ (५) किमर्थं संहत चतुरङ्गुलिमूल एवमानम् चत्वारो वेदाः, पदक्रमादिभेदेन तत्पाठश्च चतुर्विधः । अतः संहतचतुरङ्गुलिमूले-एव मानम् ॥ [६] षण्णवतिर्वामाः ॥ लक्षश्रुत्यात्मकवेदस्य कर्मोपासनाज्ञानात्मकानि त्रीणि काण्डानि मलत्रयापहत्यै विभक्तानि सन्ति । अशीतिसहस्रश्रुत्यात्मकं कर्मकाण्डं, षोडश सहस्रश्रुत्यात्मकं तूपासनाकाण्डं । उक्तोभयकाण्डगतश्रुतिसंख्या हि षण्णवतिसहस्रात्मिकैव, प्रतिसहस्रं त्वेका वामा। अतोयज्ञसूत्रं षण्णवतिवामापरिमाणकमेव विधीयते । सूच्यते चैतद्धारणानन्तरमेव षण्णवतिसहस्रश्रुतिविहितं सर्वं त्वयोपासितव्यमिति ॥ ज्ञानकाण्डस्य श्रुतिसहस्रचतुष्कं तु सन्न्यासिनामेवोपयुज्यते ॥ न च तेषां यज्ञोपवीत कर्तव्यतानुशिष्यते ॥ उक्तं च ब्रह्मोपनिषदि—कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः । तैर्हि धार्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम्—इति ॥ अथवा—चतुर्वेदेषु गायत्री चतुर्विंशतिकाक्षरी । तांवै चतुर्गुणां कृत्वा ब्रह्मतन्तुमुदीरयेदिति षण्णवतिवामोपपत्तिः । सामवेदीयच्छान्दोग्यसूत्रपरिशिष्टे हि प्रकारोऽन्य एवै तन्निर्माणोपपत्तेः । तिथिर्वारश्च नक्षत्रं तत्त्ववेदगुणान्वितम् । कालत्रयं च मासाश्च ब्रह्मसूत्रं हि षण्नवम्-इति अनेन हि ब्रह्मसूत्रस्य विराड्रूपत्वम ॥ कालचक्रात्मकत्वं वा ॥ एतद्धारणाद्धि सार्वात्म्यगवेषणा सूच्यते ॥ सामुद्रिकशा-

स्त्रेषु च पुरुषाणां मध्यम परिमाणं स्वकीय षरणवत्यङ्गुलिमितं लिखितमस्ति। अतस्तदानुरूप्येणापि पृष्ठवंशेचेत्यादि श्लोक कथित विन्यास विशेष निष्पत्त्यर्थं युक्तियुक्तमेव षरणवत्या संहताङ्गुलिमूलैरुपवीतपरिमाणम् ॥ (७) किमर्थं त्रिगुणीकरणत्वम्— कात्यायनस्मृत्याम्— त्रिवृदूर्ध्ववृतं कार्यं तन्तुत्रयमधो वृतम्— इति ॥ त्रिगुणनिर्मिता हि सृष्टिरत एतदपि सृज्यते त्रिभिरेव गुणैः ॥ त्रिगुणात्मकत्वं प्रकृतेरपि ॥ त्रिभिर्गुणैः सूच्यते च वर्णत्रयस्यैवाधिकार इति ॥ त्रिभिस्तन्तुभि र्निष्पादितमेतत् 'सर्वथैतद्धारणानन्तरं 'त्रीण्येवर्णानि देवर्षिपितृसंबद्धान्यपाकर्तव्यानी' त्यभिप्रायसूचकमिति ॥ त्रिवेणीधारावदेतदपि त्रितन्तुनिष्पन्नमुपवीतमनन्तं माहात्म्यमावेदयति ॥ द्वितीयवारं त्रिगुणीकरणेन च सत्त्वरजस्तमोमयानां विष्णवादीनामत्राश्रयः, एतत्करणक एव धारयितॄणां तत्परिचयः, एतदुपकरणोपकृतानामेव वेदत्रयीकृतोपकारश्च सूच्यते ॥ [८] ब्रह्मग्रन्थिः ॥ भगवता कात्यायनेनोक्तमेव प्रणवेन ग्रन्थि कृत्वेत्यादि। तदेव देवलोक्त्या दृढीक्रियते—त्रिवृत्तं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते, ग्रन्थिकालेच—त्रिरावेष्ट्य दृढं बद्ध्वा ब्रह्मविष्णुशिवान्नमेदिति। देवत्रयात्मको हि प्रणवः ॥ ब्रह्मग्रन्थिना च-यथाविधि विहितकर्माचरणेनर्णमुक्तिमधिगम्य सत्त्वशुद्धिद्वारकात्मज्ञानलाभेन च ब्रह्मैक्यं प्राप्यत इति सूच्यते ॥ [९] जीर्णोपवीत विसर्जनमन्त्रः—एतावद्दिनपर्यन्तं ब्रह्म त्वं धारितं मया। जीर्णत्वात्त्वत्परित्यागो

गच्छ सूत्र यथासुखम् ॥ (१०) एतत्संस्कारकालः । उपनयनसंस्कारस्य काम्य-मुख्य गौण भेदेन कालस्त्रिविधः ॥ —तथाहि ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे । राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोऽष्टमे । मनुः २ । ३७ इति काम्यः ॥ गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥ मनुः २ । ३६ ॥ याज्ञवल्क्यश्च—गर्भाष्टमेऽष्टमेऽब्दे वेत्याद्याह ॥ — इति मुख्यः ॥ आ षोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते । आ द्वाविंशात्क्षत्रबन्धोराचतुर्विंशते विंशः ॥ मनुः २ । ३८ ॥ इति गौणः ॥ अतऊर्ध्वं त्रयोऽप्येते यथा कालमसंस्कृताः । सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥ नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित् । ब्राह्मान्यौनांश्च सम्बन्धानाचरेद्ब्राह्मणः सह ॥ इति व्रात्यत्वेऽनिष्टत्वम् ॥ देश-कालावस्थानां विशेषवैशिष्ट्यादखिलं कर्म समृद्धं जायते । इति विशिष्टावस्थाग्रहणम् ॥ अत्रोपपत्तिः ॥ वसवोह्यष्टौ, बृहदारण्यकोपनिषदि तेष्वग्निः प्रथमो गणितः । स च ब्राह्मणानां देवः । विराजो मुखस्थानाद्द्वयोरेवोत्पत्तिः अत एवाष्टमे वर्षे ब्राह्मणस्योपनयनम् ॥ ११ कुत्रैतद्विसर्जितं विधेयम् ( मदनपारिजाते ) ॥ छेदे विनाशे वा सूतक मृताशौचान्ते मलमूत्रसंसृष्टे ह्युपवीतं जीर्णं वा सरिदब्धि-तडाकाद्यन्यतमोदके समुद्रं गच्छ स्वाहेति मन्त्रेण प्रणवेन व्याहृतिभिर्वा विसृजेत् ॥ [१२] हेमाद्रौ द्वयोस्त्रयाणामप्येषां धारणं विहितम् ॥ यज्ञोपवीते द्वे

धार्यं श्रौते स्मार्ते च कर्मणि । तृतीयमुत्तरीयार्थं वस्त्राभावे तदिष्यते ॥ (१३) उपवीतमलङ्कारं स्रजं करकमेव च । उपानहौ च वासश्च धृतमन्यैर्न धारयेत् । (१४) मेखलामजिनं दण्डमुपवीतं कमण्डलुम् । भिन्नं क्षिप्त्वाप्सु गृह्णीयान्नवं मन्त्रेण कोविदः ॥ [१५] कलौ कार्पासस्यैवास्य विहितता ॥ कार्पासमुपवीतंस्याद्विप्रस्योर्ध्ववृतं त्रिवृत् । शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ॥ निर्णयसिन्ध्वादिधर्मग्रन्थेषु "कलौ कार्पाससम्भवम्" इति— कार्पासमुपवीतार्थं निर्मितं ब्रह्मणा पुरेत्यादिदर्शनात्– सर्ववर्णेष्वस्यैव प्रायः प्रचारदर्शनाच्च कार्पासमेवोपवीतं सर्वैर्धार्यमिति ॥ (१६) सव्यत्वापसव्यत्वयो र्निर्णयः ॥ मनुः २ । ६२ उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः । सव्ये प्राचीनआवीती निवीती कण्ठसज्जने ॥ तथाच गोबिलः— दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येऽसे प्रतिष्ठापयति दक्षिणस्कन्धमवलम्बनं भवति–एवं यज्ञोपवीती भवति ॥ सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेऽसे प्रतिष्ठापयति सव्यं कक्षमवलम्बनं भवति । एवं प्रीचीनातीवी भवति । शिरोऽवधाय दक्षिणपाण्यादावप्यनुद्धृते कण्ठादेव सज्जने ऋजु प्रालम्बे यज्ञसूत्रे वस्त्रे च निवीती भवति—इति ॥ [१७] कथं किं कार्यम् । कृतोपवीती देवेभ्यो, निवीती च भवेत्ततः । मनुष्यांस्तर्पयेद्भक्त्या, ऋषिपुत्रानृषींस्तथा ॥ आह्निकतत्त्वे ॥ मनुः ३ । २७९—प्राचीनावीतिनासम्यगपसव्यमतन्द्रिणा । पित्र्यमानिधनात्कार्यं विधिवद्दर्भपाणिना ॥

इति दैविकादिकर्मसूपवीतविन्यासशिक्षा ॥ (१८) का चात्रोपपत्तिरिति- यजु० शत० का० २ प्र० ३ ब्रा० ४— प्रजापतिं वै भूतान्युपासीदन् प्रजा वै भूतानि विनो धेहि यथा जीवामेति, ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदंस्तानब्रवीत् यज्ञो वोऽन्नं अमृतत्वं च ऊर्क् सूर्यो वो ज्योतिरिति ॥ अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्योपासीदंस्तानब्रवीत् मासि मासि- वोऽशनं स्वधा, मनोजव श्चन्द्रमा वो ज्योतिरिति ॥ अथैनं मनुष्याः (ऋषयः) प्रावृता उपस्थं कृत्वोपासीदंस्तानब्रवीत् सायंप्रातर्वोऽशनं, प्रजा वो, मृत्युर्वोऽ- ग्निर्वो ज्योतिरिति ॥ देव पितृर्षीणां प्रजापत्युपस्थितिकालानुरूपयैव प्रक्रि- यया एतेषां कर्माणि सर्वथोपपन्नानि- इत्याशयः ॥

अपरंच हिरण्यगर्भस्य शरीरे 'तिथि र्वारश्च नक्षत्रं तत्त्वं वेदा गुणत्रयम् । का- लत्रयं च मासाश्च ब्रह्मसूत्रं हि षण्नवम्, इत्यागमप्रामाण्यात् षण्णवतिव- स्त्वात्मकं राशिचक्रमेव यज्ञोपवीतं स्थितमस्ति । दक्षिणायनोत्तरायणेति संज्ञया तद्द्विधा विभक्तम् । पितृयान देवयानेति नाम्ना च तत् कथ्यते । आगमेषु पि- तृलोको दक्षिणस्यां देवलोकश्चोत्तरस्यां वर्ण्यते । अत एव पितृसम्बन्धी सम- स्तः क्रियाकलापो दक्षिणाभिमुखै र्दक्षिणांसस्थितयज्ञसूत्रैश्चक्रियते ॥ एवं देवस- म्बद्धश्च समस्तः क्रियाकलापो वामस्कन्धस्थितयज्ञसूत्रैरेव विधीयते ॥ देव- सम्बद्धमेव सदा सामान्योद्दिष्टं कर्मजातमतः सामान्येन वामस्कन्धस्थितयज्ञोप

वीता एव सन्तस्तिष्ठन्ति ॥ इत्यनेनाप्युपपद्यते यज्ञसूत्रस्य सव्यापसव्यत्वम् ॥

अनेन च सव्यापसव्यप्रक्रियाविशेषेण कर्मादृष्टद्वारा कर्तृणां देवलोक पितृलोकप्राप्तिः पूर्वमेव सूच्यते ॥

अन्योक्ताः कल्पनाश्च

१ गायत्री प्रकृतिर्ज्ञेया गुणत्रयमयी, चतुर्विंशत्यक्षराणि मन्त्रस्थानि, श्रमा कामादिदेव्यष्टकं चेति द्वात्रिंशत्संख्या त्रिभिर्गुणैः संगुणिता जायते षण्णवत्यात्मिका । अथवा सैकापि सती शक्तिः शिवरूपिणी "मंत्रस्थ चतुर्विंशत्यक्षरमयी, श्रमादिशक्त्यष्टकमयी च, इच्छा ज्ञान क्रियारूपत्रित्वेन त्रिगुणीकृता षण्णवत्यात्मिका जायते । अथवा द्वासप्ततिर्नाड्यः गायत्र्यक्षराणि चतुर्विंशतिरिति मिलित्वा षण्णवतिर्भवति । षण्णवतिश्चात्र वामा ज्ञेयाः । क्षत्रियार्थं चतुरशीतिपर्वभिर्द्वासप्ततिपर्वभिस्तु वैश्यार्थमुपवीतम् । ( पर्व-वामा ) ॥

२ नवाङ्गुलपरिमाणास्तु वामाः । तदुक्तम्— तन्तुभिः साध्यते मूलपर्वभिश्चतुरङ्गुलैरिति । पृथिवी हि नवखण्डास्ति ॥

३ अत्रहि-सत्त्वादिभेदेन सोमसूर्याग्निभेदेनेच्छाज्ञानक्रियाभेदेन वा त्रिगुणीकरणे नवतन्तवः । अथवा-त्वक् असृक् मांसं मेदः अस्थि मज्जा शुक्रं प्राणः जीवः इति नवतन्तवः । अथवा ब्रह्मविष्णुमहेश्वराः गायत्री सावित्री सरस्वती च इडा पिंगला सुषुम्णाचेति नवतन्तवः । गायत्र्यक्षराणि २४ व्याहृतयश्च त्रयः इति

मिलित्वा सप्तविंशतिस्तन्तवो यज्ञोपवीते ॥

४ अत्र हि परंब्रह्मस्वरूपो ग्रन्थिः ॥ गुणत्रयमयं सूत्रं प्रोतं ब्रह्मणि यत्परे । ब्रह्मग्रन्थियुतं तस्माद्धृदये धारयेद्द्विजः॥ गुणत्रयमयं विश्वं ब्रह्मणि ग्रथितं परे । हृदये धारयेत्स्मृत्यै सदा सर्वत्र संस्थितम् ॥ सूत्रात्मिकायाः प्रकृतेर्ग्रन्थिभूतो महेश्वरः । चिद्रूपः पुरुषो देवो निष्कलो निष्क्रियः परः ॥

५ कृते पद्ममयं सूत्रं त्रेतायां कांचनोद्भवम् । द्वापरे राजतं ज्ञेयं कलौ कार्पास-मुच्यते॥ कार्पासं तु समासाद्य शुचिर्नेत्राद्विशोधितम् । जीवद्भर्तृकया नार्या ब्राह्मण्या कर्तितं तु यत् ॥ कन्या वा कर्तयेत्सूत्रं प्रमदापि पतिव्रता । विधवापि साधुशीला दुःशीला नहि कर्तयेत ॥ (उपयुक्तानि स्मार्तवचनानि) —

६ यथा वज्रं सुरेशस्य यथा शूलं हरस्य च । यथा विष्णोर्गदा चक्रं तथा-ब्रह्मपवित्रकम् ॥ सर्वात्मभूतमहादेवकर्तृकतदङ्गुलिकरणक ब्रह्मशिरःकर्तनदोष-निवारकं पावयितृ च पवित्रं सर्वकर्मसु ॥

७ तिलकं ब्रह्मसूत्रं च पवित्रं धौतवस्त्रकम् । शिखा ग्रन्थिसमायुक्ता पंचमुद्रा धरो द्विजः ॥

८ नदीवेगोद्भवं नीलं सुदृढं च सुवर्तुलम् । अश्मानं सर्वदोषघ्नं देवर्षिभिराधि-ष्ठितम् ॥ जन्मन्युपायने यज्ञे विवाहे शान्तिकर्मणि । प्रेतगृहे च निर्दिष्टं मति-मानानयेद्बुधः ॥ यक्षरक्षःपिशाचाश्च भूतग्रहविनायकाः । एते हि प्रशमं

यान्ति दर्शनादश्मनो यतः ।।

९ मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला, मुञ्जालाभे तु कुशैः कार्या ॥

१० ब्रह्मणो विहितां चर्यां यो जानाति सकृदपि । स लोके ब्रह्मचारीति कथितो वेदपारगैः ॥ अथवा- ब्रह्म वेदस्तदध्ययनार्थं व्रतं चरतीति ब्रह्मचारी ॥

११ येन बाह्यान्तरं सद्यो याति नित्यं पवित्रताम् । अपोशानं तु विज्ञेयं सर्व कर्मसु पावनम् ॥

१२ वाचं यच्छेति कथितं सत्यत्वरक्षायै ॥

१३ नवनीतप्रयोगेण च ब्राह्मणेन नवनीतहृदयेन भाव्यमिति सूच्यते ॥

१४ यज्ञात्प्रचलिता वेदाः पलाशे संस्थिताः पुरा ।
तस्मात्पालाशदण्डस्य वेदविच्छुद्धिमिच्छति ॥

१५ संन्ध्यास्नानविहीनो यो जपस्वाध्यायवर्जितः ।
चण्डालादपि स ज्ञेयो ब्राह्मणोऽप्यधमाधमः ॥
प्रातः संन्ध्यां परित्यज्य यो देवपूजनं चरेत् ।
अशुद्धः स दुराचारः सर्वकर्मबहिष्कृतः ॥
सन्ध्यामुपासते ये तु सततं शंसितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥
सूतके मृतके चैव सन्ध्याकर्म न संत्यजेत् ।

मनसोच्चारयेन्मंत्रान्प्राणायाममृते द्विजः ॥

१६ प्राणो वायुः शरीरस्थ आयामस्तस्य निग्रहः ।
प्राणायाम इति प्रोक्तो मुनिभिः शास्त्रपारगैः ॥

षष्ट्युत्तराणि प्राणायामस्य । पूरकादिना षड्वारं तान्यावर्त्यन्ते ! भवन्ति च तानि ३६० तावानेव वर्षः ॥ एतान्येव षष्ट्या घटिकाभिः गुणितानि जायन्ते २१६०० । षष्ट्या प्राणायामैरजपामन्त्रजप इव निष्पद्यते ॥

१७ पञ्चाङ्गुलिभिर्नासाग्रपीडनं प्रणवाभिधा । मुद्रेयं सर्वपापघ्नी वानप्रस्थ गृहस्थयोः ॥ कनिष्ठानामिकाङ्गुष्ठै र्नासाग्रस्य च पीडनम् । ओङ्कारमुद्रा सा प्रोक्ता यतेश्च ब्रह्मचारिणः ॥

१८ पितैवोपनयेत्पुत्रं तदभावे पितुः पिता । तदभावे पितुर्भ्राता स्वकुल्यो गोत्रजो गुरुः ॥

१९ द्विधा केशाः प्रकर्तव्याः सीमन्तकरणे स्त्रियाः । रक्तश्वेतेन सूत्रेण वेष्टयेत्कचबन्धनम् ॥ शिवशक्तिस्वरूपार्थं द्विधा केशस्य बन्धनम् । वेदे मन्त्रोपनिषदि वृहदारण्यके तथा ॥ स्त्रावपातनिवृत्त्यर्थं संस्कारोऽनवलोभनम् ॥

२० पुंसवने—

दर्पणे दर्शयेत्क्षीरं पूजां कृत्वा विधानतः । श्वेतेन जायते बालः पीतवर्णेन कन्यका । कपिशेन भवेच्छण्ढो ह्येतद्गर्भस्य लक्षणम् ॥

२१ ॥ चूडाकरणे—
एकदर्भे त्रयो देवा ब्रह्मविष्णुमहेश्वराः । तस्माद्दर्भः प्रयत्नेन बहिःस्थाप्यः प्रयत्नतः ॥ पूर्वदक्षिणभागे तु दर्भं प्रागुत्तराशिरः । पश्चिमे चोत्तरे चैव वाम भागेन धारयेत् ॥ उपनयने—
२२ पट्टिकायां सुवर्णस्य प्रसार्य कुङ्कुमादिकम् । तदभावे तु रौप्यस्य कुर्याद्वित्तानुसारतः ॥ अहतं वासः—
ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् । अहतं तद्विजानीयात् सर्वकर्मसु पावनम् ॥ द्वादशाङ्गुलविस्तारो दैर्घ्यं च द्विगुणं तथा । अष्टसूत्रकृता रज्जुः कौपीनो नातिलम्बितः ॥
२३ वृथा स्नानं वृथा सन्ध्या वृथा होमो वृथा जपः । तत्सर्वं निष्फलं याति यो वै कौपीनवर्जितः ॥ २४ शिखा धार्या मूलतो गोखुरमात्रा ॥
२५ आनृशंस्यं क्षमा सत्यमहिंसा च दया शमः । दानं प्रसादो माधुर्यमार्जवं च यमा दश ॥ शौचमिज्या तपो दानं स्वाध्यायोपस्थनिग्रहः । व्रतोपवासौ मौनं च स्नानं च नियमा दश ॥
२६ शौचम्— विप्रो वृक्षः शौचमेतस्य मूलं वेदाः शाखा धर्मकर्माणि पत्रम् । तस्माच्छौचं यत्नतः पालनीयं छिन्ने मूले नैव वृक्षो न शाखाः ॥
२७ अग्निर्हि पूर्वं देवेभ्यः पलाय्य च मृगाश्रितः । मार्गस्य चर्मणस्तस्मा-

द्धिवच्छुद्धिरिष्यते ॥ नचात्र हिंसादोषः— यज्ञार्थमुपयोग्यं तु यद्यद्वस्तु भवेन्नृणाम् । तत्र हिंसां न जानीयात्कथितं मुनिपुङ्गवैः ॥

२८ विष्णुधर्मोत्तरे— सौवर्णमणिपात्रेषु कांस्यरौप्यायसेषु च । भिक्षां दत्त्वा न धर्मोऽस्ति गृहीत्वा नरकं व्रजेत् ॥ अलाबुं दारुपात्रं च मृण्मयं वैदलं तथा । एतानि भैक्षपात्राणि विज्ञेयानि मनीषिभिः ॥ विदलं वंशादिकृतपात्रविशेषः ॥

२९ वेदस्य निधिरूपोऽयं दण्डःप्रोक्तो मनीषिभिः । सद्यस्तद्भावनां ज्ञात्वा धार्यते ब्रह्मचारिभिः ॥ सत्वचं धारयेद्यस्तु दण्डं पलाशसम्भवम् । बुद्धिर्वृद्धिस्तथा सिद्धिः सन्ततिस्तस्य वर्धते ॥

३० नाभिस्थानादधो भूमिर्नाभेरूर्ध्वं च खमिति । मुञ्जकाण्डैः कृतां तत्र धारयेद्रशनां व्रती ॥ चतुर्दशभुवनाश्रयो देहः । मेखलाया अधः सप्त भुवनानि । उपरि सप्त । तेषां परस्परयोगाभावसूचिका मेखला ॥

३१ न मधुमांसे अश्नीयाः— यदि वा न समर्थःस्यान्मधुमांसे विवर्जितुम् । तथापि वर्जयेत्पर्वस्वपि व्रतदिनेष्वपि ॥ चतुर्दश्यष्टमी चैव- अमावस्या च पूर्णिमा । पर्वाण्येतानि सर्वाणि रविः सङ्क्रान्तिरेवच ॥

३२ उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः । साङ्गं च सरहस्यं च तमाचार्यं प्रचक्षते ॥ एकमंशं तु वेदस्य वेदाङ्गान्यपि वा पुनः । योऽध्यापय-

ति वृत्त्यर्थमुपाध्यायः स उच्यते ।। निषेकादीनि कर्माणि यः करोति यथाविधि । सम्भावयति चान्नेन सविप्रो गुरुरुच्यते ॥ मन्त्र ब्राह्मण कल्पानां छन्दसां यजुषामृचाम् । षरणां यः प्रविभागज्ञः सोऽध्वर्युः श्रेष्ठ उच्यते ॥

३३ स्वप्नेऽपि न स्पृशेद्देवि गुरूणामासनं पदा । आसनस्पर्शनान्नश्येदायुस्तेजो बलं यशः ॥

३४ ब्रह्मग्रन्थियुतं सूत्रं गुरुभ्यः प्रापितं सदा । यः स्नाति सम्यग्गायत्र्या स योग्यः सर्वकर्मसु ॥ यज्ञोपवीतं यः स्नाति तस्मै प्रीणन्ति देवताः ।। संस्कृतमुपवीतं तु मतिमान्धारयेन्नवम् । मासद्वयान्तेऽप्याच्छिन्ने मनुरित्येवमब्रवीत् ।।

३५ ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः । सकेशं चोपयामं तु निष्केशं तु पवित्रकम् ॥

३६ संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विज । मुक्त्वाङ्गुष्ठकनिष्ठे तु शेषेणाचमनं पिबेत् । माषमज्जनमात्रास्तु संगृह्य त्रिःपिबेदपः ॥

३७ यदा तु प्राङ्मुखी छाया पुरुषाद्द्विगुणा भवेत् । तदा नक्तं विजानीयान्नकुर्यात्तत्र भोजनम् ।।

३८ अङ्गुष्ठमूले ब्राह्मं स्याद्दैवं चाङ्गुलिमूर्धनि । अङ्गुष्ठस्य प्रदेशिन्या मध्ये पित्र्यं प्रकीर्तितम् ॥ प्राजापत्यं त्वङ्गुलिमूले ॥ ब्राह्मणस्य दक्षिणहस्तेऽन्तरे ( मध्ये ) प्राजापत्यं तीर्थम् । तेन लाजाहोमं कुर्यात् । प्राजापत्येनैव तीर्थेन यज्ञ आ-

हुतयो दीयन्ते । अतएव स्रुक्स्रुवावाहुतिदानायाङ्गुलिमूल एवाङ्गुष्ठेन गृह्येते ॥
३९ अग्नीन्धनम्— पुरा जग्राह वै मृत्यु हिंसयन् ब्रह्मचारिणम् । अग्निस्तं मोचयामास तस्मात्परिचरेद्धि तम् ॥ अवधीयताम् यस्मिन्नग्ना उपायनहोमः कृतः स्यात्तं स्नानव्रतं यावद्धारयेत् । तस्मिंस्त्रैविद्यकादयो व्रतहोमाः । तमेव सायं प्रातरिन्धीत ॥ ननु दिनद्वयव्यापिन्यस्मिन्संस्कारे सति प्रथमदिनाग्निर्विसर्ज्यः ॥

मण्डलनिर्माणोपपत्तिः—

४० दिनद्वयव्यापिनो यदि केनचिद्बीजवापादिसंस्कारा विधेयाः स्युस्तदा कर्तव्यारण्यकव्रतविषये द्वितीयस्मिन्नेव दिने, एकाहःसमाप्येष्वप्यारण्यकसंस्कारावसर एव च मण्डलं विरच्यते । तदपि विविधै रङ्गैः । अग्निप्रतिकृतिरपि-रेखारूपात्र निर्मीयते । तत्रापि यागवद्विविधरङ्गावश्यकता । यजमानोऽपि तत्पूजात्र कार्यते— इति हि स्थितिः । अतोऽत्र विषये स्पष्टं प्रतीयते, यदारण्यकव्रतेष्वरण्यावश्यकतापूर्त्यै तस्यारण्यस्य प्रतिकृतिरूपमेतन्मण्डलं निष्पाद्यते । अतएवात्र विविधवर्णपुष्पलतादिचित्रविभूषितमेतन्मण्डलमाश्रममण्डलमिव संपाद्यते । तेषु च संस्कारेष्वग्नीन्धनं सायंप्रातर्विधिविहितं विधेयमेव । अत एवात्राग्निः प्रतिष्ठाप्यते पूज्यते च । आरण्यकव्रतेष्वेवास्यावश्यकत्वं मत्वेदं द्वितीयदिन एव तदवसरे विद्वांसो विदधति । एकदिनसमाप्येष्वपि तदवसर एव । अरण्येऽपि लतापुष्पादिशोभा । अत्रापि पुष्पलतादिप्रतिकृति-

निर्मीयते — इति हि मण्डलनिर्माणमुपपद्यत एव ॥

कथमुपनयनसंस्कारात्प्रागेव विद्यारम्भः—

४१ उपायनारम्भे हि उपनयनसंस्कारात्पूर्वमेव विद्यारम्भनाम्नाक्षरारम्भो विधीयते, एष तु न विद्यारम्भः । अक्षरारम्भविद्यारम्भयोर्मुहूर्तचिन्तामण्यादिषु पार्थक्येन विहितत्वात् । तथाहि— निर्णयसिन्धौ-"अथ विद्यारम्भ इत्यनन्तरं (मदनरत्ने) अक्षरस्वीकृतिं कुर्यादित्यादि, (श्रीधरः) हस्तादित्य—प्रोक्ताक्षरस्वीकृतिः" इत्यादिचोक्तम । धर्मसिन्धौच— अथ विद्यारम्भ इत्युक्त्वा पञ्चमे वर्षेऽक्षरलेखनारम्भ उत्तरायणे कार्य इत्यादि, विघ्नेशं—प्रणवपूर्वकमक्षरमारभेतेत्यादिचोक्तम् । एवमन्येष्वपि स्मृतिशास्त्रेषु ॥ अस्य विद्यारम्भेतिनामख्यातिस्तु लोकप्रसिद्ध्या अक्षररूपत्वेन वा विद्यायाः । वेदाध्ययन रूपविद्यारम्भस्तु "कृतोपनयनस्यास्य व्रतादेशनमिष्यते । ब्रह्मणो ग्रहणं चैव क्रमेण विधिपूर्वक,, मित्यादिना मन्वादिभिरुपायनसंस्कारमन्तरा सर्वथाऽविहितत्वान्निषिद्धः । ऋग्वेदभाष्योपोद्घाते चोपनयनसंस्कारात्प्रागस्य वेदविद्यारम्भस्य निषेधः सर्वथा प्रपञ्चितः । अत एवाक्षरारम्भादनन्तरं विहितोपनयनसंस्कारः परिहिताहतवासा धृतयज्ञोपवीतादि विधिवत्कृताभिवादनादि ब्रह्मचारिभूतः शिष्य आचार्येण गायत्रीमन्त्रादिरूपवेदविद्यारम्भः कार्यते । तस्मादकृतोपनयनसंस्कारायापि उपनेतव्यायाक्षरारम्भमात्रं न किंचिदपि विरुद्ध्यते । वेदाध्यय-

नस्यैवोक्तसंस्कारात्पूर्वं विरुद्धत्वात् ॥

## उपनयनकाले द्वितीययज्ञोपवीतम्

४२ उपनयनसंस्कारकाले हि शुभलग्नवेलायां यज्ञोपवीतमेकं वटुः पित्राद्युपनेतृभिर्मन्त्रपूर्वकं परिधाप्यते । तदनु कतिचनान्यान् कर्मविशेषान्विधाय भिक्षादानकाल उपनेता भिक्षादानात्पूर्वमस्मै द्वितीयमपि यज्ञोपवीतं परिधाप्य भिक्षामर्पयति। परं नात्र शुभलग्नापेक्षा पूर्वोपवीतवत्–ज्ञायते। अत्र विषये 'उपवीतं वटोरेकं द्वे तथेतरयोः स्मृते, इति स्मृतिवचनप्रामाण्यादुपनयनसंस्कारे वटोर्यज्ञोपवीतद्वयधारणं यद्यपि समीचीनं न प्रतिभात्यापाततस्तथापि नैतदसमीचीनम् ॥ यत्— 'यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि । तृतीयमुत्तरीयार्थे वस्त्राभावे तदिष्यते' इति स्मृत्युपदेशेन वस्त्रार्थमप्युपयोगो यज्ञोपवीतस्य कथ्यते ॥ वैवाहिके संस्कारे च श्वशुरेण पूजाकाले वरः पाद्यादि दत्वा विष्णवे महाराजाय यज्ञोपवीतं वासो नम इत्युक्त्वा यज्ञोपवीतमेवामूल्यं वस्त्रं परिधाप्यते । ततः प्रभृत्येव स गृहस्थो भूत्वा "द्वे तथेतरयोः स्मृते" इति स्मृत्यनुशासनादुपवीतद्वयाधिकारी सम्पद्यते । विष्णुपूजादिष्वप्येवं वस्त्रार्पणानन्तरमेवोपवीतं निवेद्यते । अतो वस्त्रार्थमेतदप्यिष्यत इति हि निश्चयः । अथवा अपरार्के 'यज्ञोपवीतं यो दद्याद्दानकाले तु धर्मवित् । पावनं सर्वविप्राणां ब्रह्मदानस्य तत्फलम्' —इति स्मृत्या सर्वोत्तमं दानमेत-

द्दानम् । अत एवोपनयनसंस्कारेष्युपनेत्रा भिक्षादानकालेऽमूल्यमेतद्वासः सर्वोत्कृष्टं वैतद्दानमितिमत्वाऽयं-वटुः परिध्याप्यते द्वितीयमपि यज्ञोपवीतम् । इत्थं चास्य वस्त्रधिया दत्तत्वाद्वस्त्रत्वेनैव ग्रहीतव्यत्वाच्चोपवीतं वटोरेकमिति न विरुध्यते ॥ अन्यद्वा विवेचनाकुशलैरत्र विवेचनीयमिति ॥

कुलगुरोरुपनेतृत्वप्रचारोपपत्तिः—

४३ यद्यपि पितैवोपनयेत्पुत्र मित्यादि स्मार्तवाक्यानुपूर्वीबलात् पित्रादिष्वेवोपनेतृत्वं मुख्यं, कुलगुरुस्त्वत्रान्तिमस्तथापि कश्मीरेषु प्रचलितः कुलगुरुकर्तृको यज्ञोपवीतसंस्कारः सर्वथा नानुचितः ॥ श्रुतिभिः स्मृतिभिर्गृह्यकारैश्चोपनेतृकर्तृकमन्त्रवाचनस्यानेकशः संस्कारेषु चोदितत्वमस्ति । पौरोहित्यबहिर्भूतानामन्येषां च व्यावहारिककर्मधुरन्धराणामनभ्यस्तवैदिकमंत्राणां मंत्रानभिज्ञत्वे तत्तन्मंत्रवाचनमुपदेशादिदानञ्चानभिज्ञानां सर्वथोपनेतृत्वे दुर्घटं दुष्करं च माभूदिति मंत्राभिज्ञस्यैवामुख्यस्यापि कुलगुरोरुपनेतृत्वं मंत्रानभिज्ञपित्रादिसद्भावेऽपि मुख्यतामावहतीति ॥ संस्कार्यस्य हि संस्कर्त्रा सह योनिसम्बन्धाद् विद्यासम्बन्धः पारम्पर्यागतो गरिष्ठ एवेत्यप्यत्र विवेचनीयम् ॥

४४ यज्ञोपवीतमिति मंत्रस्य विशिष्टार्थः— हे शिष्य ! यदीदृशं यज्ञोपवीतं यज्ञस्य - अतिपूज्यस्य परमात्मनः, उप - समीपे वि - विशेषेण तदैक्येन इतं - ज्ञातम्, भावे निष्ठाप्रत्ययः ज्ञानमित्यर्थः, तत् प्रतिमुञ्च - स्वानुभूत्या स्वरू-

पभूतं परमात्मानं प्रकटीकुर्विति गुरुरुपदिशति । कीदृशं तत् यज्ञोपवीतं-यज्ञेन संगत्या ईक्षणादिरूपया उप - आधिक्येन वि - विविधं इतं - गतं प्राप्तं, "स ऐक्षत बहुः स्यां" इति श्रुतेः, आध्यात्मिकाधिभौतिकाधिदैविकरूपेण तदेवैकं सम्पन्नमित्यर्थः । परमं - उत्कृष्टम् , पवित्रम् - धर्मादिभ्योऽप्यत्युत्कृष्टं पवित्रतापादकम् , धर्मादयो हि नात्यन्तिकीं शुद्धिं जनयन्ति विनाशित्वात्, तदुक्तं श्रीमद्भगवद्गीतासु "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इत्यादि ॥ ब्रह्मैक्यज्ञानं तु न तथा निर्विकारत्वात्, अत एव जीवन्मुक्तानां बाह्यधर्माधर्मादिलेपो न लिम्पति परधर्मवेत्तृत्वाद्विमलत्वाच्च तदुक्तं "परमार्थविन्न पापैर्नच पुण्यैर्लिप्यते विमलः" इति । प्रजापतेः - प्रकर्षेण जायन्ते इति प्रजा इन्द्रियाणि तद्विषयास्तेषां वृत्तयश्च, तान् पाति स्वसत्ताविधानेन रक्षति इति प्रजापति र्जीवः, तस्य यत् सहजं - स्वाभाविकं रूपं न त्वविद्यादिवन्नैमित्तिकम्, जीवाधीनैव हीन्द्रियादीनां सत्ता, सुषुप्तिमरणादिषु तथोपलम्भात् । यच्च जीवात्परस्तात् - परम् "अक्षरात्परतः परः" इति श्रुतेः, जीवस्यापि सत्तादायकं अन्यथा जडात्मवादिमतप्रतिष्ठितत्वं प्रसज्येतेति । आयुष्यम् - आयुषो हितं साफल्यदमित्यर्थः, एतज्ज्ञानेन ह्यायुषः सफलत्वम्, अन्यथा क्षणिकभोगादिषु प्रसक्तत्वात् प्रमादित्वेन निष्फलत्वमेवेति । अग्र्यं - अग्रे सृष्ट्यादौ भवं सगुणमूर्तिं समापन्नं भूतानामनुग्रहाय । यद्वा क्षराक्षरादिप-

दार्थजातादप्यत्युत्कृष्टं पुरुषोत्तममित्यर्थः, यदुक्तं श्रीमद्भगवद्गीतासु "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" इत्युपक्रम्य "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः इति॥ शुभ्रं–अविद्या मलेनास्पृष्टं घनेनेव सूर्यः, यदुक्तं वार्तिके "धूमाभ्रधूलिनीहारैरस्पृष्टोऽपि दिवाकरः। यथा छन्न इवाभाति तथैवात्मापि मायया" इति, तदीदृशं यज्ञोपवीतं परब्रह्मैक्यं प्रतिमुञ्च – स्वस्वरूपभूतं परमात्मस्वरूपं प्रकटीकुर्विति गुरुणा जीवब्रह्मैक्यदृष्टिरेवानेन प्रहिता न तु बाह्यत्रिवृत् - कार्पास सूत्रदानमिति तात्पर्यम्,। तदुक्तं — विस्मृत स्वात्मतत्त्वस्य स्मृतिदानं प्रयोजनम्। यज्ञोपवीतबन्धस्य नापूर्वं दानमिष्यते—इति॥ किं च शिष्या ब्रह्मविद्याविविदिषवो निवृत्तकर्माणो मोक्षाय ये प्रवृत्तास्तेषां निर्विघ्नतया ब्रह्मप्राप्तिमाशास्ते आचार्य इति गुरुः शिष्यमाशीर्भिरभिनन्दति॥

बलमस्तु तेजः इति, बलं – विद्यानिमित्तं वीर्यं मिथ्याज्ञानानभिभाव्यतालक्षणोऽतिशयस्तदस्तु। तेजः – दुर्ज्ञेयार्थज्ञानेषु तीक्ष्णत्वं, अन्तःकरणशुद्धिश्चास्तु, "क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ती" ति श्रुत्युक्तोपदेशेन सूक्ष्मतमे यज्ञोपवीताख्यपरमात्मज्ञानेऽवहितो भव, मा कदाचित् तद्विमुखस्तद्रिक्तो वा भवेत्याशयः॥ एवं सद्गुरुणा तत्त्वमस्यादिश्रुतिप्रतिपादितेन श्रवणनयेनानुगृहीतः स्वयं मननिदिध्यासनाभ्यां कृताभ्यासः अहं

ब्रह्मास्मीति श्रुत्युक्तां स्वानुभूतिं प्रकटयति, असि त्वं जीवश्चिदाभासलक्षणको यज्ञस्य परमात्मनो, यज्ञोपवीतं - यज्ञेन संगत्या प्रेर्यप्रेरकत्वादिरूपया उप— समीपे तस्य वीतं — ज्ञातम् मया हि त्वं चिदाभासोऽपि तत्त्वमसीत्यादि महावाक्यार्थबलाच्चित्स्वरूप एव मतोऽसीति भावः, अतोऽहं संहृत समस्त प्रपञ्चस्त्वा—त्वामुपवीतेन लक्षणयानुकूल्येन तदभेदज्ञानेनेतियावत् उप—समीपे परमात्मनो नह्यामि— बध्नामि तत्परामर्शदार्ढ्यात्त्वां तत्रैव लयं नयामीति भावः। अनेन च स्वरूपप्रकाशनबलेन जीवत्वसुलभसंसृत्यापदम्भोधिमग्नस्त्वं न भवेरित्याशयः। यज्ञोपवीतमिति० (सामान्यार्थः) हे ब्रह्मचारिन्! यज्ञस्य—विष्णोः परमात्मनः सामीप्ये वर्तमानस्य जीवस्य प्रतिकृतिभूतं यज्ञोपवीतं चैतन्यविशेषाधिष्ठाने हृदि त्रैवर्णिकैर्बहिर्धार्यमाणं त्रिवृत्सूत्रात्मकं परमं — सर्वोत्कृष्टतया वरणीयं पवित्रं— पवित्राणामप्यतिपवित्रतापादकं प्रजापतेः— प्रजानां पालयितु ब्रह्मणोऽपि यत् प्रसिद्धं सहजं— देहेन्द्रियादिभिः सहोत्पन्नं, परेभ्योऽपि परमायुषः साफल्यकारि सर्वश्रेष्ठतमं अग्रे भवं वा शुभ्रमुज्वलं निर्मलमिति यावत्, तदेतत् प्रतिमुञ्च— हृदि धारय, एतद्धारणेन च तव विद्यानिमित्तं बलं— वीर्यं तेजश्च - दुर्ज्ञेयार्थपाटवमस्तु भूयादित्यहमाशासे— त्वं यज्ञोपवीतं जीवस्वरूपोऽसि, तात्त्विकं रूपं मम किमस्तीति स्मृत्यै यज्ञोपवीतेनानेन त्वां योजयामि, इति ॥

गायत्रीमन्त्रस्य सामान्यार्थः— ॥

अकारोकारमकाराणां, विष्णवादिकारणत्रयवाच्यानां समुच्चयः, वेदत्रयसारभूतः प्रणवापरपर्यायः सर्वाश्रयः, सृष्टिस्थितिलयकारणम्, ब्रह्मात्मैक्यहेतु श्चित्प्रकाशरूपः ओमिति । यमेवैष वृणुते तेन लभ्य इति श्रुतिदृशा स्वस्वरूपप्रकाशनेनावति संसारभयाद्रक्षतीति ओम् ॥ भवति तत्तरूपेणेति भूः विश्वमय इत्यर्थः । भावयति स्वस्मिन्सर्वं लयं प्रापयतीति भुवः । स्वरति – तापयति भीषयति सर्वानिति स्वः, तथा च श्रुतिः "भयादस्याग्निस्तपति भयादुदेति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावतिपञ्चमः ॥" अथवा भूरादिलोकत्रयव्यापकः, एतादृशस्य प्रणववाच्यस्य तदिति षष्ठ्यर्थे प्रथमा, तस्यानिर्वाच्यस्य देवस्य द्योतनात्मकस्य सर्वप्रकाशकस्य सर्वसत्तादायकस्य सर्वस्तुत्यस्य, आनन्दघनस्य सवितुः – सर्वप्रेरकस्यान्तर्यामिनो विज्ञानानन्दस्वभावस्य हिरण्यगर्भोपाध्यवछिन्नस्य वा आदित्यान्तरपुरुषस्य वा ब्रह्मणो वरेण्यं – वरणीयं सर्वैः प्रार्थनीयं भर्गः – सर्वपापानां संसारस्य च भर्जनसमर्थं तेजः सत्यज्ञानादि वेदान्तप्रतिपाद्यम् वयं धीमहि – ध्यायामः छान्दसं संप्रसारणम्, तस्य कस्य, यः सवितान्तर्यामी भूत्वा सर्वप्रेरकः सर्वकर्मसु प्राणिनो भ्रामयन् सदा तिष्ठति ॥ स नोऽस्माकं धियो – बुद्धीः प्रचोदयात् प्रकर्षेण चोदयतु प्रेरयतु सत्कर्मानुष्ठानाय, ॥ तत्प्रेरितयैव बुद्ध्याखि-

ला मनुष्या आत्मज्ञाने शक्ता अनन्तभवाम्भोधिपारगमनसमर्था स्त्रिविधक्लेशमुक्ताश्च भवन्ति ॥ उक्तं च 'दृश्यते त्वग्र्यया बुद्ध्या इति, एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य ऊर्ध्वं निनीषति, एष एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषति ॥ न देवा यष्टिमादाय रक्षन्ति पशुपालवत् । यं हि रक्षितुमिच्छन्ति धिया संचोदयन्ति तमिति ॥ अपिच— तेषां सततयुक्तानाम्भजताम्प्रीतिपूर्वकम् । ददामि बुद्धियोगन्तं येनमामुपयान्तिते ॥ ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया । एष हि प्रपन्नानामेव प्रसादकर्ता न त्वात्मविमुखानामित्याह— तमेव शरणङ्गच्छ सर्वभावेन भारत। तत्प्रसादात्परां शान्ति स्थानं प्राप्स्यसि शाश्वतम् ॥

## अन्यप्रकारको मन्त्रार्थः

भूरिति सन्मात्रमुच्यते । भुव इति सर्वं भावयति प्रकाशयतीति व्युत्पत्त्या चिद्रूपमुच्यते । सुव्रियते इति व्युत्पत्त्या स्वरिति सुष्टु सर्वैं व्रियमाणं सुखस्वरूपमुच्यते इति शङ्करभाष्यम् । मह इति सर्वातिशायिमहत्तरस्य नाम । जन इति सर्वकारणम् । तप इति सर्वतेजोरूपं परं तेजः । सत्यमिति सर्व बाधारहितं कथ्यते ॥

तच्छब्देन प्रत्यग्भूतं स्वतःसिद्धं परं ब्रह्मोच्यत इति शङ्करभाष्यम् ॥ सवितुरिति सृष्टिस्थितिलयलक्षणकस्य सर्वप्रपञ्चस्य समस्तद्वैतविभ्रमस्याधिष्ठानं

लक्ष्यत इति शङ्करभाष्यम् । सवितुःसर्वान्तर्यामितया प्रेरकस्य जगत्स्रष्टुः परमेश्वरस्येति सायणभाष्यम् । वरेण्यमिति सर्ववरणीयं निरतिशयानन्दरूपमिति शङ्करभाष्यम् । सवितुर्वरेण्यमित्यत्र षष्ठी राहोःशिर इतिवद्भेदे ॥ अविद्यातत्कार्ययोर्भर्जनाद्भर्गः ॥ देवस्येति पदेन—'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षीचेता केवलो निर्गुणश्च' इत्यादिश्रुतिप्रतिपाद्यः सर्वसाक्षी चेता – केवलो – निर्गुणब्रह्मरूप आत्मा गृह्यते ॥ धीमहीत्यनेन 'आत्मेत्येवोपासीत' इत्यादि श्रुत्यर्थानुष्ठानं सूच्यते ॥ धियो योनः प्रचोदयादिति-यो भर्गः सर्वान्तर्यामी ज्योतीरूपः परमेश्वरोऽस्माकं संसारिणां जीवानां बुद्धिवृत्तीर्धर्मार्थकाममोक्षादिषु सदा प्रेरिताः कुर्वंस्तिष्ठति ॥ अविद्यातत्कार्ययोर्भर्जनाद्भर्गः स्वयंज्योतिः परब्रह्मात्मकं तेजः धीमहि – तद्योऽहं सोऽसौ योऽसौ सोऽहमिति वयं ध्यायमेति सायणभाष्यम् ॥

प्रणवान्ता गायत्री जपादिभिरुपास्या । तत्र शुद्धगायत्री प्रत्यग् ब्रह्मैक्यबोधिका । बुद्ध्यादिसर्वदृश्यसाक्षिलक्षणं यन्मे स्वरूपं तत्सर्वाधिष्ठानभूतं परमानन्दं निरस्तसमस्तानर्थरूपं स्वप्रकाशचिदात्मकं ब्रह्मेत्येवं धीमहि ध्यायेमेति सर्वात्मकब्रह्मबोधकोऽयं गायत्रीमन्त्रःसम्पद्यते । इति शङ्करभाष्यम् ॥

'भूर्भुवः स्वरिति लोकत्रयात्मको हि प्रणवः इत्यनया सर्वसम्मतया रीत्या ब्रह्मणि सर्वं दृश्यवर्गात्मकं जगद्विलाप्य तत्सवितुरित्यादि मन्त्रार्थचिन्तनेन

स्वात्मानमपि तद्रूपेणैव भावयति साधक इति काश्मीरिक श्रीशिवोपाध्याय-कृते गायत्रीनिर्णये ॥ अद्वितीयं ब्रह्मैव गायत्रीशिरसापि बोध्यते—
आप इत्याप्नोतीति व्युत्पत्त्या व्यापित्वमुच्यते । ज्योतिरिति प्रकाशरूपत्वम् । रस इति सर्वातिशयत्वम् । अमृतमिति मरणादिसंसारनिर्मुक्तत्वमिति—सर्वव्यापि-सर्वप्रकाशक-सर्वोत्कृष्ट-नित्यमुक्तमात्मरूपं सच्चिदानन्दात्मकं भूर्भुवःस्वरात्मकं यदोङ्कारवाच्यं ब्रह्म तदहमस्मीति ॥

यद्यपि वेदेष्वनेकानि कर्माणि नानाविधाश्चोपासनाः सन्ति, तथापि द्विजात्यर्थं सुखप्राप्तये दुःखनिवृत्तये च मोक्षहेतुर्गायत्रीमंत्रोपासनैव वेदसारा सर्वसम्मता ॥

'गायत्री वा इदं सर्वं भूतं यदिदं किञ्च' (छा) इत्यादि श्रुतिभि र्गायत्री सर्वात्मिका, नतु केवलं चतुर्विंशत्यक्षरात्मिकैव, नापि-अवयवयुक्ता विशिष्टाकृतिर्देवतैव बोद्धव्या । सैषाऽभेदभावनयैवोपास्यात्मानमपि तत्स्वरूपं मन्यमानेनोपासकेन । उक्तं च 'देवो भूत्वा देवान्यजेत्, 'अथ योऽन्यां देवतामुपास्ते ऽन्योऽसावन्योहमस्मीति न स वेद, यथा पशुरेवं स देवानाम्, इति ॥

## गायत्रीमन्त्रमाहात्म्यम्

चतुर्ष्वेव वेदेषु छान्दोग्ये बृहदारण्यके तथान्येष्वपि सर्वमान्यशास्त्रेषु गायत्रीमन्त्रमाहात्म्यं विशेषतया सामवेदस्य सावित्र्युपनिषदि, अथर्ववेदस्य सूर्योपनिषदि, नारायणोपनिषद्यपि वर्णितमस्ति ॥ ओङ्कारपूर्विकास्तिस्रो महा-

व्याहृतयोऽव्ययाः । त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम् ॥ योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः । स ब्रह्म परमभ्येति वायुभूतः खमूर्तिमान् ॥ ( मनु २ । ८१ - ८२ ) गायत्री छन्दसामहमिति - गीतायाम् । गायत्रीजपकृद्भक्त्या सर्वपापैः प्रमुच्यते इति ( पराशरः ) ॥ सर्वपापानि नश्यन्ति गायत्रीजपतो नृपति भविष्यत्पुराणे ॥ ऐहिकामुष्मिकं सर्वं गायत्रीजपतो भवेदिति ( अग्निपुराणे ) ॥ ब्रह्महत्यादिपापानि गुरूणि च लघूनि च । नाशयत्यचिरेणैव गायत्रीजापको द्विजः- इति [ पद्मपुराणे ] ॥ य एतां वेद गायत्रीं पुण्यां सर्वगुणान्विताम् । तत्त्वेन भरतश्रेष्ठ स लोके न प्रणश्यति—इति महाभारते भीष्मपर्वणि ॥ वेदशास्त्रपुराणानामयमेव सुनिश्चयः । गायत्र्या जपहोमादिविधिः सर्वार्थसाधकः ॥ गायत्री वेदजननी गायत्री पापनाशिनी । गायत्र्यास्तु परं नास्ति दिवि चेह च पावनम् ॥ [ याज्ञ० ] ॥

यथा च मधु पुष्पेभ्यो घृतं दुग्धाद्रसात्पयः । एवं हि सर्ववेदानां गायत्री सारमुच्यते । [ वृहद्योगी याज्ञ० ४ । १६ ] ॥ अष्टादशसु विद्यासु मीमांसातिगरीयसी । ततोऽपि तर्कशास्त्राणि पुराणं तेभ्य एव च ॥ ततोऽपि धर्मशास्त्राणि तेभ्यो गुर्वी श्रुतिर्द्विज । ततोऽप्युपनिषच्छ्रेष्ठा गायत्री च ततोऽधिका [ वृहत्सन्ध्याभाष्ये ] ॥

अथोङ्कारमहिमा—

सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो

ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत् ॥ एतद्ध्येवाक्षरं ब्रह्म-एतद्ध्येवाक्षरं परम् । एतद्ध्येवाक्षरं ज्ञात्वा ब्रह्मलोके महीयते ॥ एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् । एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ इत्यादि कठोपनिषदि ॥ एतद्वै सत्यकाम ! परं चापरं च ब्रह्म यदोङ्कारः । तस्माद्वि-द्वानेतेनैवायतनेनैकतरमन्वेति ॥ इत्यादि प्रश्नोपनिषदि ॥ सम्पूर्णा माण्डूक्यो-पनिषदपि ओङ्कारवर्णन एव समाप्तास्ति ॥ गीतायामपि ओमित्येकाक्षरं ब्रह्मे-त्यादि ॥ योगदर्शने— तस्य वाचकः प्रणवः तज्जपस्तदर्थभावनम् ॥ मनुः—अकारं चाप्युकारं च मकारं च प्रजापतिः । वेदत्रयान्निरदुहद् भूर्भुवःस्वरितीति च ॥ त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्— इति ॥

—:०*०:—

ॐ

## श्रीमहागायत्र्यै नमः



**ओमिति सारं त्रय्या, अवति संसारकदर्थनायासात् ॥**
**ब्रह्मादिवाचकं यत्, तत्प्रपद्येऽहं परं ब्रह्म ॥ १ ॥**

प्राणानायम्योर्ध्वं, यज्जपसक्तो महीयते सत्ये ॥
ओमिति तद्वन्देऽहं, यदालम्बनं परं श्रेष्ठम् ॥ २ ॥
उपनिषत्स्वभिमतं यद्, यदुपास्त्याखिलतपः फलप्राप्तिः ॥
यदर्थं ब्रह्मचर्यं, तन्मृग्यमोमिति परं ब्रह्म ॥ ३ ॥
तिर्यक् चोर्ध्वमधस्ताद्, यस्यान्तो न लभ्यते तदनन्तम् ॥
हृदयेषु नादरूपं, तद् ध्येयमोमिति परं ब्रह्म ॥ ४ ॥
यद्गर्भजन्मव्याधि,-जरामरण संसार महाभीतेः ॥
त्रायते तारयत्यपि, तत् तारमोमिति परं ब्रह्म ॥५॥
निर्गुणमपि सगुणं यद्, यदक्षरं त्रिकालाक्षरं ज्योतिः ॥
ओमिति भातु पुरस्ताद्,-अशेष भासकं परं ब्रह्म ॥६॥
श्रुतिसारांशत्र्यक्षर,-योगजास्त्रिवर्गान्वितास्त्रिमात्रः ॥
तदतीतोऽपि तुरीयो, यस्तमोङ्कारमुपासेऽहम् ॥ ७ ॥
योगी यदुपासनया, जनिमृतिसंसारबन्धनान्मुक्तः ॥
तत्सायुज्यं भजते, प्राणोत्क्रमणे स ओङ्कारः ॥ ८ ॥

विधिविष्णुमहेशादिभि, रपि यः प्रणूयते प्रयतैर्भक्त्या ॥
प्रणवः सोऽयं सर्वै, र्ध्येयो दुष्कृताशनिपातः ॥ ९ ॥
अन्तेऽन्तकखेदादपि, यदुच्चारमहामहिमलीनाघः ॥
दुर्लभं लभते धाम तदोमिति परं प्रपद्येऽहम् ॥ १० ॥
भूर्भुवः स्वरित्यशेष, – लोकेषु व्यापकं परं तेजः ॥
भवति भावयति स्वरति, यदखिलं तदुपास्महे ब्रह्म॥११
तदिति चातिप्रसिद्धं, वाङ्मनसगोचरातीतमनन्तम् ॥
सच्चिदानन्दरूपं, ब्राह्मं भर्गं श्रये शान्तम् ॥ १२ ॥
सवितुः सर्वोत्कृष्टं, सर्वसवितृ सवितृमण्डलान्तःस्थम् ॥
सत्यं स्तवीमि धाम, प्रदीप्तमज्ञानतमोहारि ॥ १३ ॥
रत्नराशींश्च विहाय, मृग्यमभिनन्द्यमनर्घ्यमनुत्तरम् ॥
वन्दे धाम वरेण्यं, पराध्र्यतममनुपममनन्तम् ॥१४॥
सर्वाविद्याप्लोषक, उत्कटभवबीजभर्जको भर्गः ॥
अखिलापत्कल्पाग्निः, सोऽघौघान्मे द्रुतं दह्यात् ॥ १५ ॥

सृष्टिस्थित्यन्तनाट्य, – केलिनिर्वहणसततोद्युक्ता या ॥
ज्योतिर्मूर्तिर्दैव, – स्याविर्भूयात्पुरो मे सा ॥ १६ ॥
यद्ध्यानेनोदयत, स्तत्काले गलति विश्वनीहारः ॥
सोऽहमितिमतिकरं तद्, ध्यायेयं ध्येयचमत्कारि ॥ १७ ॥
सदसत्कर्मादेशी, बुद्धिवृत्तीश्चारयन्ननीशस्य ॥
निनीषुरूर्ध्वमधो वा यः परमात्मा स नः शरणम् ॥१८॥
प्रचोदयतु नः सोऽयं, धीवृत्तीरनवद्येषु कार्येषु ॥
भगवानन्तर्यामी, भूयो भूयो नमोऽस्त्वस्मै ॥ १६ ॥
रचितहृदन्तः शय्यां, परां प्रेयसीं चिरवियोगखिन्नाम् ॥
मदनमोहन मद्भक्ति – मपि कृतार्थयाबलां बालाम् ॥२०॥
विश्वनाथपदद्वन्द्वा, – र्पितमनोहरस्तवसुमनोहारः ॥
प्रीणयतु भगवच्चरण, – सततचिन्तनोत्सुकान्भक्तान् ॥२१
गायत्रीमन्त्रभावार्थ विकसत्पुष्पमालिका ॥
सदामोदप्रदा भूयान्नाथपत्पङ्कजार्पिता ॥ २२ ॥

ॐ

गर्भाधानादिसंस्कारविधिः ॥

अथवा प्राधान्यात्—

# उपनयनविधिः ॥



ॐश्रीगणेशाय नमः ॥ ॐसंस्काराणामानुपूर्व्यं वक्ष्ये लौगाक्षिभाषितम् । यथोक्तकर्महोमानां यथाकालं यथाक्रमम् ॥ ऋतौ चतुर्थ्यां स्नातायां प्राजापत्यं चरुं श्रपेत् । नि[1]श्चये बीजवापस्य गृह्यसूत्रे विधिः स्मृतः ॥ सीमन्तश्च यथाकालं कार्यं पुंसवनं ततः । जातकर्म नामकर्म दर्शनं सूर्यचंद्रयोः ॥ अन्नप्राशनहोमोऽथ चूडोपायनमेव च । ऋतुनक्षत्रयागात्प्राग्भैक्षस्याचरणं विदुः ॥ व्याख्यानं ब्रह्मचर्यस्य होमे सम्पादिते भवेत् । शौचशिक्षा सन्ध्योपास्तिर्मन्त्राणा-

---

१ निशायामित्यपि पाठः ।

मुपदेशनम् ॥ तथाग्नीन्धनमन्त्राणां ततो भैक्षस्य भोजनम् । तिष्ठन्तं तदहःशेषं स्थापयेद्ब्रह्मचारिणम् ॥ संध्योपासाग्निकार्यं च भैक्षचर्या ततोऽन्वहम् । त्रैविद्यकं यथाकालमुपाकर्म यथोदितम् ॥ चातुर्होतृकहोमौ द्वावारण्यानि व्रतान्यथ । गोदानहोमस्त्रैविद्या-पवर्गोऽपि ततः स्मृतः ॥ यथाकालमध्ययनमुत्सर्जनविधिस्ततः । प्रास्याग्नौ दण्डमजिनं मेखलां चाप्सु निक्षिपेत् ॥ मधुपर्कस्ततो देय आचार्याय यथाविधि । स्नानव्रते स्नातकाय मधुपर्कं प्रदापयेत् ॥ एकादशानुवाकेन ततः स्यादनुशासनम् । स्नातस्य स्वस्तिपुण्य-त्वाद्धोमोऽथ स्यात्त्रिकादिभिः ॥ पुत्रं पितार्हयेत्तत्र स्वस्तिपुण्ये-ष्वतः परम् । मधुपर्कविधेरन्ते विद्यातीर्थव्रतादिकम् । सर्वं कुर्या-द्विधानेन ततो गृहसमाश्रयः ॥ अनेन क्रमयोगेन यथाकालं द्वि जन्मनाम् । कार्यः शरीरसंस्कारः पावनः शुभकर्मकृत् ॥ न नि र्वापश्च सीमन्ते जातकर्मणि वै तथा । चूडोपायनयोस्तद्वत्त्रैविद्य-कव्रतद्वये ॥ उपाकर्मणि गोदाने वैवाहे प्रायश्चित्तके । चतुर्गृहीत्वा

प्रधानं यथाकर्म समाचरेत् ॥ पुंसवने नामकरणे सूर्यसोमादिदर्शने । अन्नप्राशे चतुर्होत्रे वर्गे चैवापवर्गके ॥ एषां चरुः प्रदातव्यश्चान्येषां जुहुयाद् घृतम् ॥ सीमन्ते जातकरणे चूडोपायनके तथा । सापवर्गे त्रैविद्येऽथ ह्युपाकर्मणि वै तथा । गोदाने चैव सर्वेषां प्रत्यृचं जुहुयाद् घृतम् ॥ सकृत्संस्कृतसंस्काराः सीमन्तेन द्विजस्त्रियः । यं यं गर्भं प्रसूयंते स सर्वः संस्कृतो भवेत् ॥ अनेकदेवतायागे त्वेक एव चरुर्भवेत् । ऋते पुंसवनाद्गृह्ये लौगाक्षिवचनं यथा ॥

[मौंजीबन्धे रक्तश्वेते मण्डले सूर्यचन्द्रयोः । वर्तुले नवरेखाढ्ये वितस्तिसंमिते यजेत् ॥ केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः । ललाटसंमितो राज्ञः स्यात्तु नासान्तिको विशः ॥ नाङ्गुष्ठादधिका कार्या समित्स्थूला तथा क्वचित् ॥ उपवीतं घटोरेकं द्वे तदितरयोः स्मृते ॥ ओंकारं पूर्वमुच्चार्य व्याहृतीस्तदनन्तरम् । सावित्री प्रणवश्चान्ते जप एवमुदाहृतमिति ॥]



आदावश्मचूर्णेन ग्रहमण्डलं । तद्दक्षिणत ऊर्ध्वाधश्चन्द्रसूर्ययोर्न-वरेखायुते द्वादशांगुलमिते श्वेतरक्ते वर्तुले मण्डले चोल्लिख्य कल-शं पूजयेत् ॥ ओंकारो यस्य मूलमित्यादि । वषट्ते० तावत् । ततः कलशे प्रधानानि । ओंप्रजापते नहि त्वदन्य एता विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्, नमः ॥ १ ॥ ये के च ज्मा महिनो अहिमाया दिवो जज्ञिरे अपां सधस्थे । ते अस्मभ्यमिषये विश्वमायुः क्षप उस्रा वरिवस्यन्तु देवाः, नमः ॥ २ ॥ अग्निस्तुविश्रवस्तमं तुवि-ब्रह्माणमुत्तमम् । अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे, नमः ॥ इन्द्र क्षत्रमभि वाममोजोऽजायथा वृषभश्चर्षणीनाम् । अपानुदो जनममित्रयन्तमुरुं देवेभ्यो अकृणोरु लोकम्, नमः ॥ प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठः । यस्योरुषु त्रिषु विक्रमणेष्वधि क्षियन्ति भुवनानि विश्वा, नमः ॥ ३ ॥ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं

द्यामुतेमां कस्मै देवाय हविषा विधेम, नमः॥ संवत्सरस्य प्रतिमां ये त्वा रात्र्युपासते। तेषामायुष्मतीं प्रजां रायस्पोषेण संसृज, नमः॥ काय नमः। कस्मै०। कतमस्मै नमः। प्रजापतये नमः। प्रजापते–इति द्वाभ्याम् । प्रजापते नहि त्वदन्य एता विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु, नमः॥ असावमुष्य पुत्रोऽमुष्यासौ पुत्रो वयं स्याम पतयो रयीणाम्, नमः॥ (देवदत्तो यज्ञदत्तस्य पुत्रो यज्ञदत्तस्य देवदत्तः पुत्रो वयं स्याम पतयो रयीणाम्, नमः) ॥ ४ ॥ कया नश्चित्र आभुवदूती सदावृधः सखा। कया शचिष्ठया वृता, नमः॥ कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसा । दृढा चिदारुजे वसु, नमः॥ कयातदिति तृचानां द्वे व्रतस्य ॥ कया तच्छृण्वे शच्या शचिष्ठो यया कृणोति मुहुः काचिदृष्वः । पुरु दाशुषे विचयिष्ठो अंहोथादधाति द्रविणं [१]जरित्रे, नमः॥ प्रजापतये नमः। प्रजापते–इति द्वाभ्याम् । प्रजापते

१ जनित्रे ।

नहि त्वदन्य० इत्यादि नमः । असावमुष्येत्यादि नमः ॥ ( देवदत्तो यज्ञदत्तस्य पुत्रो यज्ञदत्तस्य देवदत्तः पुत्रो वयं स्याम पतयो रयीणां, नमः ) ॥५॥ मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाभिचष्टे मित्राय हव्यं घृतवद्विधेम, नमः ॥ प्र स मित्र मर्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षति व्रतेन । न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात्, नमः ॥ ६ ॥ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवावाजस्य सङ्गथे, नमः ॥ सं ते पयांसि समुयन्तु वाजः सं वृष्ण्यान्यभिमातिषाहः । आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व, नमः ॥ ७ ॥ अन्नपते अन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्रदातारं तारिष ऊर्जं नो देहि द्विपदे चतुष्पदे, नमः ॥८॥ ये के च ज्मा० ॥९॥ ओं मेधां मह्यमङ्गिरसो मेधां सप्तर्षयो ददुः। मेधामाग्निश्च वायुश्च मेधां धाता दधातु मे, नमः ॥ मेधां मे

१ उदाहरण भूतमेवैतत् । असावित्यादि तु मन्त्रः ।

वरुणो राजा मेधामग्निर्ददातु मे । मेधामिन्द्रश्च सूर्यश्च मेधां देवी सरस्वती, नमः ॥ या मेधा अप्सरस्सु गन्धर्वेषु च यन्मनः । देवी मानुषी[1] या मेधा सा मामाविशतादिह, नमः ॥ शरीरं मे विचक्षणं वाङ्मे मधु मद्दुहे । निशामितं निशामये मयि श्रुतं, नमः ॥ यन्मेऽनूक्तं तद्रमतां शकेयं यदनुब्रुवे प्रियः[2] श्रुतस्य भूयासं, मेधया संविधीमहि अवृधमहमवृधस्त्वमसौ सौम्य प्राणस्त्वं मे गोपाय ब्रह्मणस्तदणी[3] स्थ श्रुतं मे मा प्रहासीत्, नमः ॥ छन्दोभ्यो नमः ॥ उपायनाय नमः । ये के च ज्मा० ॥१०॥ ये के च ज्मा० । छन्दोभ्यो नमः । त्रैविद्यकाय नमः ॥११॥ उपाकरणदेवताभ्यो नमः ॥१२॥ चातुर्होतृकाश्चतुर्होतॄणां देवानाम् । चित्तिः स्रुक्चित्तमाज्यं वाग्वेदिराधीतंबर्हिः केतो अग्निर्विज्ञातमग्निर्वाचस्पतिर्होता मन उपवक्ता प्राणो हविः सामाध्वर्युरिन्द्रं गच्छ, नमः ॥ पृथिवी होता द्यौरध्वर्युस्त्वष्टाग्निर्मित्र उपवक्ता वाचस्पते वाचो वीर्येण सम्भृततमेन

१ मनुष्ये । २ प्रियाः श्रुतस्य भूयास्म । ३ ब्रह्मण अणी स्थ

यद्यसे यज्ञपतये वार्यमा स्वस्करो वाचस्पतिः सोमं पिबतु जज-
नदिन्द्रमिन्द्रियाय, नमः,, सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य
पुरोगाः । आर्तस्त इन्द्र सोमा वातापे हवनश्रुतः, नमः ॥ अग्निर्होता
श्विनाध्वर्यूरुद्रोग्निद्बृहस्पतिरुपवक्ता वाचस्पते हृद्विधे नामन्वाच-
स्पतिः सोममपादस्मासु नृम्णं धाः, नमः । सोमः सोमस्य पुरो-
गाः शुक्रः शुक्रस्य पुरोगाः । आर्तस्त इन्द्र सोमा वातापे हवनश्रुतः,
नमः ॥ वाग्घोता वातोऽध्वर्युर्दीक्षा पत्न्यापोऽभिगरो मनो हविस्त-
पसि जुहोमि वाचस्पते च्छिद्रया वाचाच्छिद्रया जुह्वा[1] दिवि
देवामृधद्धोत्रा[2] मैरयस्व नमः ॥ महाहविर्होता सत्यहविरध्वर्युर-
चित्तपाजा अग्निदचित्तमना उपवक्तानाधृष्यश्चाप्रतिधृष्यश्चाभिगरा
अयास्य उद्गाता वाचस्पते विधे नामन्विधेम ते नाम विधेस्त्व-
मस्माकं नाम मा देवानां तन्तुच्छेदि मा मनुष्याणां, नमः ॥
छन्दोभ्यो नमः । चातुर्होतृकाय नमः ॥ १३ ॥ [पुनः] चित्तिः

१ जिह्वा । २ वृधद्धोत्रा ।

स्रुक्० ॥ पृथिवी होता० ॥ अग्निर्होता० ॥ वाग्घोता० ॥ महाहवि-र्होता० ॥ छन्दोभ्यो नमः । अपवर्गे चातुर्होतृकाय नमः ॥१४॥ ॐब्रह्मणे नमः । प्रजापतये नमः । घर्माय-सम्राजे नमः । सूर्याय-बिभ्राजे नमः । देवेभ्यो-घर्मपेभ्यो नमः । पितृभ्यो-घर्मपेभ्यो नमः । छन्दोभ्यो नमः । प्रवर्ग्यव्रताय नमः ॥१५॥ ब्रह्मणे नमः । प्रजापतये नमः । घर्माय सम्राजे नमः । सूर्याय बिभ्राजे नमः । देवेभ्यो घर्मपेभ्यो नमः । पितृभ्यो घर्मपेभ्यो नमः । छन्दोभ्यो नमः । अपवर्गे प्रवर्ग्यव्रताय नमः ॥१६॥ अग्नये नमः । वायवे नमः । सूर्याय नमः । ब्रह्मणे नमः । प्रजापतये नमः । संवत्स-राय नमः । ऋतुभ्यो नमः । अरुणेभ्यः काण्वर्षिभ्यो नमः । छन्दो-भ्यो नमः । अरुणव्रताय नमः ॥१७॥ अग्नये नमः । वायवे नमः । सूर्याय नमः । ब्रह्मणे नमः । प्रजापतये नमः । संवत्सराय नमः । ऋतुभ्यो नमः । अरुणेभ्यः काण्वर्षिभ्यो नमः । छन्दोभ्यो नमः । अपवर्गे अरुणव्रताय नमः ॥१८॥ अग्नये नमः । वायवे नमः ।

सूर्याय नमः । ब्रह्मणे नमः । प्रजापतये नमः । छन्दोभ्यो नमः । ऋषिभ्यो नमः । छन्दोभ्यो नमः । औपानिषदव्रताय नमः ॥१६॥ आवहन्ती वितन्वाना कुर्वाणा चरमात्मनः । वासांसि मम गावश्चान्नपानेन वर्धय, नमः । सुवर्णां हरिणीं लक्ष्मीं धनदामश्वपूजिताम् । ततो मे श्रियमावह लोमशां पशुभिः सह, नमः ॥२०॥ आ मा यन्तु ब्रह्मचारिणो नमः । सं मा यन्तु ब्रह्मचारिणो नमः । तपो यशोयशानि नमः । जनो यशोयशानि नमः । श्रेयान्वसो यशोयशानि नमः । तं त्वा भग प्रविशामि नमः । स मा भग प्रविश नमः । अस्मिन्सहस्रशाखे [1]अरण्यमहं त्वयि मृजे नमः ॥ २० ॥ अग्नये नमः । वायवे नमः । सूर्याय नमः । ब्रह्मणे नमः । प्रजापतये नमः । छन्दोभ्यो नमः । ऋषिभ्यो नमः । छन्दोभ्यो नमः । अपवर्गे औपनिषदव्रताय नमः ॥२२॥ ये के च ज्मा० । गोदानव्रतदेवताभ्यो नमः ॥२३॥ ये के च ज्मा० ।

---

१ विभजाहं ।

छन्दोभ्यो नमः । अपवर्गे त्रैविद्यकव्रतदेवताभ्यो नमः ॥ २४ ॥ स्नातकव्रतदेवताभ्यो नमः । त्रिकाहोमदेवताभ्यो नमः । तद्विष्णोः० वासुदेवाय० । विष्णुपञ्चायतनदेवताभ्यो नमः ॥ इन्द्रः पर्वता बृहतारथेन० । ऐन्द्राग्नं० तावत् ॥ सावित्राणि सावित्रस्य देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे । महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वारदेवताभ्यः । प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चतुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय । दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः—पितृगणदेवताभ्यः । प्रजापतये । सीमन्तकरणदेवताभ्यः । अग्नये इन्द्राय विष्णवे पुंसवनदेवताभ्यः । जातकरणदेवताभ्यः । कायप्रजापतये नामकरणदेवताभ्यः । मित्राय । सोमाय । अन्नपतये । चूडाकरणदेवताभ्यः । मेधायै सरस्वत्यै छन्दोभ्यः उपायनदेवताभ्यः । छन्दोभ्यः त्रैविद्यकव्रतदेवताभ्यः । उपाकरण-

देवताभ्यः । छन्दोभ्यः चातुर्होतृकव्रतदेवताभ्यः । छन्दोभ्यः, अपवर्गे-चातुर्होतृकव्रतदेवताभ्यः । ब्रह्मणे, प्रजापतये, घर्माय सम्राजे, सूर्याय विभ्राजे, देवेभ्यो घर्मपेभ्यः, पितृभ्यो घर्मपेभ्यः, छन्दोभ्यः, प्रवर्ग्यव्रताय । ब्रह्मणे, प्रजापतये, घर्माय-सम्राजे, सूर्याय-बिभ्राजे, देवेभ्यो-घर्मपेभ्यः, पितृभ्यो-घर्मपेभ्यः, छन्दोभ्यः अपवर्गे-प्रवर्ग्यव्रताय । अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये संवत्सराय ऋतुभ्यः अरुणेभ्यः काण्वर्षिभ्यः छन्दोभ्यः अरुणव्रताय । अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये संवत्सराय ऋतुभ्यः अरुणेभ्यः-काण्वर्षिभ्यः छन्दोभ्यः अपवर्गे-अरुणव्रताय । अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये छन्दोभ्यः ऋषिभ्यः छन्दोभ्यः औपनिषदव्रताय । श्रियै-श्रीकामदेवताभ्यः । यशसे-यशस्कामदेवताभ्यः । अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये छन्दोभ्यः ऋषिभ्यः छन्दोभ्यः अपवर्गे औपनिषदव्रताय । गोदानव्रतदेवताभ्यः । छन्दोभ्यः अपवर्गे

त्रैविद्यकव्रतदेवताभ्यः स्नातकव्रतदेवताभ्यः । त्रिकाहोमदेवताभ्यः । वासुदेवादिभ्यो विष्णुपञ्चायतनदेवताभ्यः । अभयंकरीदेव्यै क्षेमंकरीभवान्यै सर्वशत्रुघातिन्यै इहराष्ट्राधिपतये अमुकभैरवाय । इन्द्राय वज्रहस्ताय अग्नये शक्तिहस्ताय यमाय दण्डहस्ताय निर्ऋतये खड्गहस्ताय वरुणाय पाशहस्ताय वायवे ध्वजहस्ताय कुबेराय गदाहस्ताय ईशानाय त्रिशूलहस्ताय ब्रह्मणे पद्महस्ताय विष्णवे चक्रहस्ताय अनन्तादिभ्योऽष्टाभ्यः कुलनागदेवताभ्यः । अग्न्यादित्याभ्यां वरुणचन्द्रमोभ्यां कुमारभौमाभ्यां विष्णुबुधाभ्यां इन्द्राबृहस्पतिभ्यां सरस्वतीशुक्राभ्यां प्रजापतिशनैश्चराभ्यां, गणपतिराहुभ्यां, रुद्रकेतुभ्यां, ब्रह्मध्रुवाभ्यां, अनन्तागस्त्याभ्यां, ब्रह्मणे, कूर्माय, ध्रुवाय, अनन्ताय हरये, लक्ष्म्यै, कमलायै, शिख्यादिभ्यः पञ्चचत्वारिंशद्वास्तोष्पतियागदेवताभ्यः, ब्राह्म्यादिभ्यो मातृभ्यः, गौर्यादिभ्यो मातृभ्यः, ललितादिभ्यो मातृभ्यः, दुर्गाक्षेत्रगणेश्वरदेवताभ्यः, राकादेवता-

भ्यः, त्रिकादेवताभ्यः, सिनीवालीदेवताभ्यः, यामीदेवताभ्यः, रौद्रीदेवताभ्यः, वारुणीदेवताभ्यः, बार्हस्पत्यदेवताभ्यः, ओंभूदेताभ्यः, ओंभुवोदेवताभ्यः, ओंस्वर्देवताभ्यः, ओंभूर्भुवःस्वर्देवताभ्यः, अखण्डब्रह्माण्डयागदेवताभ्यः, धूर्भ्यः, उपधूर्भ्यः, महागायत्र्यै, सावित्र्यै, सरस्वत्यै, हेरुकादिभ्यो वटुकादिभ्यः तण्डुलमात्रं दधि मधुपर्कं ओंनमो नैवेद्यं निवेदयामि नमः ॥ हिरण्यगर्भः० । यः प्राणतो० । य ओजोदा० । येन द्यौ० । य इमे द्यावा० । यस्येमे विश्वे० । आपो ह यन्० । आ नः प्रजाञ्ज० । अर्चन्तस्त्वा० ॥



यजमानमानीय । आसनशोधनंकुर्यात् । शुक्लाम्बरधरं० । बिभ्रद्दक्षिण० । सुमुखश्चैकदन्तश्च० । गुरुर्ब्रह्मा० । गन्धर्वैः सहचारिणीं स्तुतिकथालापैर्नुतां तारिणीं वेदानां जननीं द्विजैः स्तुतिपरैः सूर्योदये वीक्षिताम् । सिंहस्थां सुरसेवितां वटुक्रियां सप्त-

स्वैर्भूषितामोङ्कारेण विराजितां त्रिनयनां तां मेखलां नौम्यहम् ॥

अ नाभौ० । अपसर्पन्तु० । तीर्थे स्नेयं० । वसोः पवित्र०।
(शकुनानयनम् ।) आ ब्रह्मन्० । यदाबध्नन् । परमात्मने० ।
स्वप्रकाशो० । वनस्पति० । नमो धर्म० । यत्रास्ति माता० ।
अद्य तावत्० । महागणपतये० । प्रजापतये० हेरुकादिभ्यो वटु०
सुतस्य सुतयोः सुतानां वा मौञ्जीबन्धननिमित्तं धूपदीपसङ्कल्पा-
त्सिद्धिरस्तु धूपो नमः दीपो नमः ॥ "अपसव्येन" । नमः पितृ-
भ्यः० । देवताभ्यः० ॐतत्सद्ब्रह्माद्यतावत्० पित्रे इत्यादि, सम-
स्तमातापितृभ्यो० धूपः स्वधा दीपः स्वधा ॥ "सव्येन"। गायत्र्यै
नमः ॐभूर्भुवःस्वः० ३ । अद्य तावत्० । महागणपतेः कुमारस्य
श्रियः सरस्वत्याः लक्ष्म्याः विश्वकर्मणः द्वारदेवतानां प्रजापतेः
ब्रह्मणः कलशदेवतानां ब्रह्मविष्णुमहेश्वरदेवतानां चतुर्वेदेश्वरस्य
सानुचरस्य ऋतुपतेर्नारायणस्य दुर्गायाः त्र्यम्बकस्य वरुणस्य यज्ञ-
पुरुषस्य अग्निष्वात्तादीनां पितृगणदेवतानां । प्रजापतेः। सीमन्त-

करणदेवतानां । अग्नेः इन्द्रस्य विष्णोः पुंसवनदेवतानां । जात-करणदेवतानां। कस्य प्रजापतेः नामकरणदेवतानां । मित्रस्य । सोमस्य । अन्नपतेः । चूडाकरणदेवतानां । मेधायाः सरस्वत्याः छन्दसां उपायनदेवतानां । छन्दसां त्रैविद्यकव्रतदेवतानां। उपा-करणव्रतदेवतानां । छन्दसां चातुर्होतृकव्रतदेवतानां । छन्दसां अपवर्गे-चातुर्होतृकव्रतदेवतानां । ब्रह्मणः प्रजापतेः घर्मस्य सं-म्राजः सूर्यस्य विभ्राजः देवानां-घर्मपाणां पितॄणां-घर्मपाणां छ-न्दसां प्रवर्ग्यव्रतदेवतानां। ब्रह्मणः प्रजापतेः घर्मस्य-सम्राजः सू-र्यस्य-विभ्राजः देवानां-घर्मपाणां पितॄणां-घर्मपाणां छन्दसां अप-वर्गे-प्रवर्ग्यव्रतदेवतानां । अग्नेः वायोः सूर्यस्य ब्रह्मणः प्रजापतेः संवत्सरस्य ऋतूनां अरुणानां-काण्वर्षीणां छन्दसां अरुणव्रतदेव-तानां । अग्नेः वायोः सूर्यस्य ब्रह्मणः प्रजापतेः संवत्सरस्य ऋतूनां अरुणानां-काण्वर्षीणां छन्दसां अपवर्गे-अरुणव्रतदेवतानां। अग्नेः वायोः सूर्यस्य ब्रह्मणः प्रजापतेः छन्दसां ऋषीणां छन्दसां औप-

निषद्व्रतदेवतानां । श्रियः श्रीकामदेवतानां । यशसः यशस्काम-देवतानां । अग्नेः वायोः सूर्यस्य ब्रह्मणः प्रजापतेः छन्दसां ऋषीणां छन्दसां अपवर्गे-औपनिषद्व्रतदेवतानां । गोदानव्रतदेवतानां । छन्दसां अपवर्गे-त्रैविद्यकव्रतदेवतानां । स्नातकव्रतदेवतानां । त्रिकाहोमदेवतानां वासुदेवादीनां विष्णुपञ्चायतनदेवतानां । अ-भयङ्करीदेव्याः क्षेमंकरीभवान्याः सर्वशत्रुघातिन्याः। इहराष्ट्रा-धिपतेः अमुकभैरवस्य । इन्द्रस्य वज्रहस्तस्य अग्नेः शक्तिहस्तस्य यमस्य दण्डहस्तस्य निर्ऋतेः खड्गहस्तस्य वरुणस्य पाशहस्तस्य वायोः ध्वजहस्तस्य कुबेरस्य गदाहस्तस्य ईशानस्य त्रिशूलहस्त-स्य ब्रह्मणः पद्महस्तस्य विष्णोश्चक्रहस्तस्य अनन्तादीनां अष्टानां कुलनागदेवतानां अग्न्यादित्ययोः वरुणचन्द्रमसोः कुमारभौमयोः विष्णुबुधयोः इन्द्राबृहस्पत्योः सरस्वतीशुक्रयोः प्रजापतिशनैश्चरयोः गणपतिराह्वोः रुद्रकेत्वोः ब्रह्मध्रुवयोः अनन्तागस्त्ययोः । ब्रह्मणः कूर्मस्य ध्रुवस्य अनन्तस्य हरेः लक्ष्म्याः कमलायाः शिख्यादीनां

पञ्चचत्वारिंशद्वास्तोष्पतियागदेवतानां ब्राह्म्यादीनां मातॄणां गौर्यादीनां मातॄणां ललितादीनां मातॄणां दुर्गाक्षेत्रगणेश्वरदेवतानां राकादेवतानां त्रिकादेवतानां सिनीवालीदेवतानां यामीदेवतानां रौद्रीदेवतानां वारुणीदेवतानां बार्हस्पत्यदेवतानां । ओंभूदेवतानां ओंभुवोदेवतानां ओंस्वर्देवतानां ओंभूर्भुवःस्वर्देवतानां अखण्डब्रह्माण्डयागदेवतानां धुरां उपधुरां महागायत्र्याः सावित्र्याः सरस्वत्याः हेरुकादीनां वटुकादीनां आत्मनो वाञ्छ० सुतस्य सुतयोः सुतानां वा मौञ्जीबन्धननिमित्तं अर्चामहं करिष्ये ओंकुरुष्व ॥ तिलसर्षपयवान्विकीर्य । एवमेव । महागणपतेरिदमासनं नमः कुमारस्य० । हेरुकादीनां० इदमासनं नमः ॥ महागणपतये० । हेरुकादिभ्यो० । युष्मान् पूजयामि ओंपूजय । महागणपतिं कुमारं श्रियं सरस्वतीं लक्ष्मीं विश्वकर्माणं द्वारदेवताः प्रजापतिं ब्रह्माणं कलशदेवताः ब्रह्मविष्णुमहेश्वरदेवताः चतुर्वेदेश्वरं सानुचरं ऋतुपतिं नारायणं दुर्गां त्र्यम्बकं वरुणं यज्ञपुरुषं अग्निष्वा-

त्तादीन् पितृगणदेवताः । प्रजापतिं सीमन्तकरणदेवताः । अग्निं इन्द्रं विष्णुं पुंसवनदेवताः । जातकरणदेवताः । कं प्रजापतिं नामकरणदेवताः । मित्रं सोमं । अन्नपतिं । चूडाकरणदेवताः । मेधां सरस्वतीं छन्दांसि उपायनदेवताः । छन्दांसि त्रैविद्यकव्रतदेवताः । उपाकरणव्रतदेवताः । छन्दांसि चातुर्होतृकव्रतदेवताः । छन्दांसि अपवर्गे चातुर्होतृकव्रतदेवताः । ब्रह्माणं प्रजापतिं घर्मं सम्राजं सूर्यं विभ्राजं देवान् घर्मपान् पितॄन् घर्मपान् छन्दांसि प्रवर्ग्यव्रतदेवताः । ब्रह्माणं प्रजापतिं घर्मं सम्राजं सूर्यं विभ्राजं देवान् घर्मपान् पितॄन् घर्मपान् छन्दांसि अपवर्गे प्रवर्ग्यव्रतदेवताः । अग्निं वायुं सूर्यं ब्रह्माणं प्रजापतिं संवत्सरं ऋतून् अरुणान् काण्वर्षीन् छन्दांसि अरुणव्रतदेवताः । अग्निं वायुं सूर्यं ब्रह्माणं प्रजापतिं संवत्सरं ऋतून् अरुणान् काण्वर्षीन् छन्दांसि अपवर्गे अरुणव्रतदेवताः । अग्निं वायुं सूर्यं ब्रह्माणं प्रजापतिं छन्दांसि ऋषीन् छन्दांसि औपनिषदव्रतदेवताः । श्रियं श्रीकामदेवताः

यशसं यशस्कामदेवताः । अग्निं वायुं सूर्यं ब्रह्माणं प्रजापतिं छन्दांसि ऋषीन् छन्दांसि अपवर्गे औपनिषदव्रतदेवताः । गोदानव्रतदेवताः । छन्दांसि अपवर्गे त्रैविद्यकव्रतदेवताः स्नातकव्रतदेवताः त्रिकाहोमदेवताः । वासुदेवादीन् विष्णुपञ्चायतनदेवताः । अभयङ्करीदेवीं क्षेमङ्करीभवानीं सर्वशत्रुघातिनीं इहराष्ट्राधिपतिं अमुकभैरवं । इन्द्रं वज्रहस्तं अग्निं शक्तिहस्तं यमं दण्डहस्तं निर्ऋतिं खड्गहस्तं वरुणं पाशहस्तं वायुं ध्वजहस्तं कुवेरं गदाहस्तं ईशानं त्रिशूलहस्तं ब्रह्माणं पद्महस्तं विष्णुं चक्रहस्तं अनन्तादीन् अष्टौ कुलनागदेवताः । अग्न्यादित्यौ वरुणचन्द्रमसौ कुमारभौमौ विष्णुबुधौ इन्द्राबृहस्पती सरस्वतीशुक्रौ प्रजापतिशनैश्चरौ गणपतिराहू रुद्रकेतू ब्रह्मध्रुवौ अनन्तागस्त्यौ ब्रह्माणं कूर्मं ध्रुवं अनन्तं हरिं लक्ष्मीं कमलां शिख्यादीन् पञ्चचत्वारिंशद्वास्तोष्पतियागदेवताः ब्राह्मयादीः मातॄः गौर्यादीः मातॄः ललितादीः मातॄः दुर्गाक्षेत्रगणेश्वरदेवताः राकादेवताः त्रिकादेव०

सिनीवालीदे० यामीदे० रौद्रीदे० वारुणीदे० बार्हस्पत्य० ॐभूदे ॐभुवोदे० ॐस्वर्दे० ॐभूर्भुवःस्वर्दे० अखण्डब्रह्माण्डयागदे० धुरः उपधुरः महागायत्रीं सावित्रीं सरस्वतीं हेरुकादीन् वटुकादीन् आवाहयिष्यामि ॐआवाहय ॥ यवान्विकीर्य । पाद्यार्थमुदकं नमः । शन्नो देवी० । लाजाश्च० । महागणपतये० । हेरुकादिभ्यो० । वटुकादिभ्यः पाद्यं नमः ॥ शेषं निवार्य । [पुनः] शन्नो देवी० । आपः क्षीरं० । महागणपते कुमार श्रीः सरस्वति लक्ष्मि विश्वकर्मन् द्वारदेवताः प्रजापते ब्रह्मन् कलशदेवताः । ब्रह्मविष्णुमहेश्वरदेवताः चतुर्वेदेश्वर सानुचर ऋतुपते नारायण दुर्गे त्र्यम्बक वरुण यज्ञपुरुष अग्निष्वात्तादयः पितृगणदेवताः । प्रजापते । सीमन्तकरणदेवताः । अग्ने इन्द्र विष्णो पुंसवनदेवताः । जातकरणदेवताः । क प्रजापते नामकरणदेवताः । मित्र । सोम । अन्नपते । चूडाकरणदेवताः । मेधे सरस्वति छन्दांसि उपायनदेवताः । छन्दांसि त्रैविद्यकव्रतदेवताः । उपाकरणव्रतदेवताः । छन्दांसि चातुर्हो-

तृकव्रतदेवताः । छन्दांसि अपवर्गे चातुर्होतृकव्रतदेवताः । ब्रह्मन् प्रजापते घर्म सम्राट् सूर्य विभ्राट् देवाः घर्मपाः पितरः घर्मपाः छन्दांसि प्रवर्ग्यव्रतदेवताः । ब्रह्मन् प्रजापते घर्म सम्राट् सूर्य विभ्राट् देवाः घर्मपाः पितरः घर्मपाः छन्दांसि अपवर्गे प्रवर्ग्यव्रतदेवताः । अग्ने वायो सूर्य ब्रह्मन् प्रजापते संवत्सर ऋतवः अरुणाः काण्वर्षयः छन्दांसि अरुणव्रतदेवताः । अग्ने वायो सूर्य ब्रह्मन् प्रजापते संवत्सर ऋतवः अरुणाः काण्वर्षयः छन्दांसि अपवर्गे अरुणव्रतदेवताः । अग्ने वायो सूर्य ब्रह्मन् प्रजापते छन्दांसि ऋषयः छन्दांसि औपनिषद्व्रतदेवताः । श्रीः श्रीकामदेवताः । यशः यशस्कामदेवताः । अग्ने वायो सूर्य ब्रह्मन् प्रजापते छन्दांसि ऋषयः छन्दांसि अपवर्गे औपनिषद्व्रतदेवताः । गोदानव्रतदेवताः । छन्दांसि अपवर्गे त्रैविद्यकव्रतदेवताः । स्नातकव्रतदेवताः, त्रिकाहोमदेवताः । वासुदेवादयः विष्णुपञ्चायतनदेवताः । अभयङ्करीदेवि क्षेमङ्करीभवानि सर्वशत्रुघातिनि इह-

राष्ट्राधिपते अमुकभैरव । इन्द्र वज्रहस्त अग्ने शक्तिहस्त यम दण्डहस्त निर्ऋते खड्गहस्त वरुण पाशहस्त वायो ध्वजहस्त कुबेर गदाहस्त ईशान त्रिशूलहस्त ब्रह्मन् पद्महस्त विष्णो चक्रहस्त अनन्तादयोऽष्टौकुलनागदेवताः अग्न्यादित्यौ वरुणचन्द्रमसौ कुमारभौमौ विष्णुबुधौ इन्द्राबृहस्पती सरस्वतीशुक्रौ प्रजापतिशनैश्चरौ गणपतिराहू रुद्रकेतू ब्रह्मध्रुवौ अनन्तागस्त्यौ ब्रह्मन् कूर्म ध्रुव अनन्त हरे लक्ष्मि कमले शिख्यादयः पञ्चचत्वारिंशद्वास्तोष्पतियागदेवताः । ब्राह्मयादयो मातरः गौर्यादयो मातरः ललितादयो मातरः दुर्गाक्षेत्रगणेश्वरदेवताः राकादे० त्रिकादे० सिनीवालीदे० यामीदे० रौद्रीदे० वारुणीदे० बार्हस्पत्यदे० । ओंभूदे० ओंभुवोदे० ओंस्वर्दे० ओंभूर्भुवःस्वर्दे० अखण्डब्रह्माण्डयागदेवताः धुरः उपधुरः महागायत्रि सावित्रि सरस्वति हेरुकादयो वटुकादयः इदं वोऽर्घ्यं नमः । महागणपतये समालभनं गन्धो नमः ॥ एवमर्घो नमः पुष्पं नमः ॥ धूरसीति धूपः । तेजोऽसीति रत्नदीपः ।

चामरं, छत्रमादर्शादि । एताभ्यो गणपति कलशयागदेवताभ्यो धूपदीपसंकल्पात्सिद्धिरस्तु धूपो नमः दीपो नमः । एताभ्योदेवताभ्यो वासो नमः इत्यादि सर्वं । अन्नं नमः २ इत्यादि । शन्नो देवी० एताभ्यो देव० ॥ अपो० ॥ शन्नो० ॥ दक्षिणा० । एतादेवताः० ॥ तद्विष्णोः० ॥ इति । मुक्ताविद्रुम० इति च पुष्पम् ॥

अथाग्निकर्म । पात्रं तिला० । निर्दग्धं रक्षो० । अग्निं परिसमुह्य पर्युक्ष्य परिषिच्य ६ आदौ पञ्च० । १६

अथाग्निकुण्डपूजा । (वेदेरावाहनं) आगच्छ वरदे ज्ञानमुद्रे यज्ञैर्विभूषिते । वेदि वेदमयैर्मंत्रैः संस्कृते ते नमो नमः ॥ त्वामाश्रित्य स्थिता देवा घृताहुतिं पिबन्ति ये । ते देवास्तुष्टिमायान्तु मा विघ्नो यज्ञकर्मणि ॥ (अथाञ्जलिः) संमुखा तिष्ठ वेदि त्वं यथा स्थास्यन्ति देवताः । स्थानभूता शिवादीनां शक्तीनां सुरपूजिते । ब्रह्माज्ञयाद्य मे यज्ञं सफलीकर्तुमर्हसि ॥ देवस्य त्वे ति मंत्रेण यज्ञवेदिमुपस्पृशेत्–देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां

पूष्णो हस्ताभ्यामाददे । आदित्यमणे नमः । अनुमतिमणे नमः । सरस्वतिमणे नमः ( वेद्यै यज्ञाङ्गायै इति नामभ्याम् ) गन्धपुष्पाद्यर्पणम् ॥ (गणपतयेऽत्नोटं ज्वालालिङ्गे श्रीफलं च संस्थाप्य ) संव्वः सृजामि० । अश्विनोः प्राण० इति जीवाधानम् ॥ ओं गायत्र्यै नमः ३ । तत्पुरुषाय विद्महे वक्रतुण्डायधी० तन्नो दन्ती प्र० ३ । तत्पुरुषाय वि० महादेवायधी० तन्नो रुद्रः प्र० ३ ॥ वैश्वानराय विद्महे सप्तार्चिषे धी० तन्नोऽग्निः प्र० ३ । पावकाय विद्महे हेलालीलाय धी० तन्नोऽग्निः प्र० ३॥ अद्य तावत्ति० विनायकस्य चतुर्विंशतितत्त्वानां, भवस्य देवस्य, ८। (पूर्वे ) देवमुखस्य (आग्नेये) सप्तजिह्वस्य ( दक्षिणे ) वैश्वानरस्य ( नैर्ऋते ) जातवेदसः (पश्चिमे ) अग्नेः (वायव्ये) हुताशनस्य ( उत्तरे ) हुतवाहनस्य (ईशाने ) कृष्णवर्त्मनः (मध्ये ) अग्नेः सहस्राक्षस्य शतमूर्ध्नः शतं ते प्राणाः सहस्रं व्यानाः शतं ते तेजः (ऊर्ध्वे ) ब्रह्मविष्णुमहेश्वरदेवतानां काल्याः कराल्याः मनोजवायाः सुलोहितायाः धूम्रायाः स्फुलिंगिन्याः सुमनसायाः

विश्वचर्याः ब्रह्माण्डव्यापिन्याः ज्वालालिङ्गतेजसः धूम्रवर्णायाः नीलवर्णायाः कपिलायाः विस्फुलिङ्गिन्याः ज्वालायाः तेजोवत्याः हव्यवाहनायाः कव्यवाहनायाः रौद्रयाः संहारिण्याः तापिन्याः पाचिन्याः । सप्तजिह्वासहितस्य पावकस्य ब्रह्माण्डव्यापकतेजोमयपरमशिवज्वालालिङ्गदेवतानां (१स्रुवमूले) सोमस्य शुक्रस्य अग्नेः (मध्ये) महेश्वरस्य (मूर्ध्नि) ब्रह्मणः । (स्रुचोमूले) अपां (मध्ये) भास्करस्य (रन्ध्रयोः) गौर्याः दुर्गायाः कात्यायन्याः मह्याः स्रुक्स्रुवदेवतानां आत्मनो० सुतस्य सुतयोः सुतानां वा मौंजीबन्धननिमित्तमर्चामहं करिष्ये ओं कुरुष्व ॥ एवमेवासनं ॥ विनायकाय० चतुर्विंशतितत्त्वेभ्यः, भवायदेवाय, ८ पूर्वे देवमुखाय आग्नेये सप्तजिह्वाय दक्षिणे वैश्वानराय नैर्ऋते जातवेदसे पश्चिमे

१ सोम शुक्रौ तथा ह्यग्निं स्रुवमूले प्रपूजयेत् । मध्ये महेश्वरश्चैव ब्रह्मा मूर्ध्नि व्यवस्थितः ॥ स्रुचि च पूजिता ह्यापो मध्ये भास्कर पूजनम् । रन्ध्रद्वयेऽर्चयेद्गौरीं दुर्गां कात्यायनीं महीम् ॥ एते देवाः प्रपूज्यन्ते होमेषु फलदायकाः ॥

अग्नये वायव्ये हुताशनाय उत्तरे हुतवाहनाय ईशाने कृष्णवर्त्मने मध्ये अग्नये सहस्राक्षाय शतमूर्ध्ने शतं ते प्राणाः सहस्रं व्यानाः शतं ते तेजः ऊर्ध्वे ब्रह्मविष्णुमहेश्वरदेवताभ्यः काल्यै कराल्यै मनोजवायै सुलोहितायै धूम्रायै स्फुलिङ्गिन्यै सुमनसायै विश्व चर्यै ब्रह्माण्डव्यापिन्यै ज्वालालिङ्गतेजसे धूम्रवर्णायै नीलवर्णायै कपिलायै विस्फुलिङ्गिन्यै ज्वालायै तेजोवत्यै हव्यवाहनायै कव्य-वाहनायै रौद्र्यै संहारिण्यै तापिन्यै पाचिन्यै । सप्तजिह्वासहि-ताय पावकाय ब्रह्माण्डव्यापकतेजोमयपरमशिवज्वालालिङ्गदेव-ताभ्यः । सोमाय शुक्राय अग्नये महेश्वराय ब्रह्मणे । अङ्गयः भास्कराय गौर्यै दुर्गायै कात्यायन्यै मह्यै स्रुक्स्रुवदेवताभ्यः युष्मान् पूजयामि ओं पूजय । विनायकं चतुर्विंशतितत्त्वानि, भवंदेवं द। (पूर्वे) देवमुखं (आग्नेये) सप्तजिह्वं (दक्षिणे) वैश्वानरं (नैर्ऋते) जातवेदसं (पश्चिमे) अग्निं (वायव्ये) हुताशनं (उत्तरे) हुतवा-हनं (ईशाने) कृष्णवर्त्मानं (मध्ये) अग्निं सहस्राक्षं शतमूर्धानं

शतं ते प्राणाः सहस्रं व्यानाः शतं ते तेजः [ऊर्ध्वे] ब्रह्मविष्णुमहेश्वरदेवताः कालीं करालीं मनोजवां सुलोहितां धूम्रां स्फुलिङ्गिनीं सुमनसां विश्वचरीं ब्रह्माण्डव्यापिनीं ज्वालालिङ्गतेजसं धूम्रवर्णां नीलवर्णां कपिलां विस्फुलिङ्गिनीं ज्वालां तेजोवतीं हव्यवाहनां कव्यवाहनां रौद्रीं संहारिणीं तापिनीं पाचिनीं सप्तजिह्वासहितं पावकं ब्रह्माण्डव्यापकतेजोमयपरमशिवज्वालालिङ्गदेवताः सोमं शुक्रं अग्निं महेश्वरं ब्रह्माणं । अपः भास्करं गौरीं दुर्गां कात्यायनीं महीं स्रुक्स्रुवदेवताः आवाहयिष्यामि ओमावाहय ॥ आवाहयाम्यहं देवं गणेशं सुरपूजितम् । सदैव विघ्नहर्तारं सर्वकामफलप्रदम् ॥ रक्तवर्णो महातेजा रक्तस्रग्दामभूषितः । बलिः पुष्पं चरुश्चैव धूपोयं प्रतिगृह्यताम् ॥ [ज्वालालिङ्गे] आवाहयामि वृषभासनमीश्वरं तं गौरीपतिं सकलभीतिहरं सुरेशम् । चर्माम्बरं दशभुजं च त्रिशूलहस्तं व्यालैर्विभूषिततनुं मखरक्षणार्थम् ॥ अग्नौ अग्निं स्वाहासमेतं दितिजसुरनुतं रक्तवर्णं त्रिनेत्रं

कण्ठे हारं भुजाभ्यां वरमभयमथो दक्षिणाभ्यां वहन्तम् । वामाभ्यामक्षमालाममृतकलशकं रम्यहासं सुवेषं नानालङ्कारयुक्तं मृगवरसहितं त्वाह्वये होमकाले ॥ आवाहयामि दहनं धृतवेदमुद्रं साक्षस्रजं शुकगतिं निजदक्षहस्ते । वामेऽग्निकुण्डसहितं च तथा सशक्तिं त्र्यक्षंत्रिलोचनपरं मखरक्षणार्थम् ॥ आवाहयाम्यहं देवं देवदेवं हुताशनम् । जगतोऽस्य समुत्पत्तिस्थितिसंहारकारकम् ॥ देवमूर्तिं तु दातारं सर्वदेवमुखं प्रभुम् । पिङ्गेक्षणं पिङ्गजटं धूमकेतुं विभावसुम् ॥ शुकयानगतं देवं सर्वाभरणभूषितम् । सर्वदा वरदातारं जठरस्थं च देहिनाम् ॥ तेजोमूर्ति—दुराधर्षं सप्तजिह्वं महाबलम् । सप्तर्षिसप्तहोतारं समित्सप्तकमच्युतम् । विष्णुजांशकनिर्देशं भानुं वै जातवेदसम् ॥ पावकं पुष्टिदं सौम्यं भक्तानां भूतिवर्धनम् । याजकं यजमानं च पुष्ट्या विभज सर्वशः ; इदमर्घ्यमिदं पाद्यं धूपोऽयं प्रतिगृह्यताम् ॥ [स्रुवस्रुचोरावाहनम्] ॥ आवाहम्यहं देवं स्रुवं च विधिपूजितम् । स्वाहाकार-

स्वधाकार वषट्कारसमन्वितम् ॥ अष्टाङ्गुलं त्यजेन्मूलमग्रे त्यक्त्वा दशाङ्गुलम् । कर्त्तव्यं गोपदाकारं दण्डस्याग्रे तु कङ्कणम् ॥ विष्णुस्थानं च गृह्णीयादाह्वयने च हुताशने । पद्मयोनिं समादाय होता च सुखमाप्नुयात् ॥ अथादित्यादि सोमादि देवस्थितिप्रदाविमौ । आवाहयामि स्रुक्स्रुवौ यज्ञसाफल्यहेतवे ॥ भगवन्पुण्डरीकाक्ष० । यवान्विकीर्य । शन्नो देवी० । लाजाश्च० विनायकाय० इत्यादि । पाद्यं नमः । [पुनः] शन्नो देवी० । आपः क्षीरं० । विनायक चतुर्विंशतितत्त्वानि भवदेव ८ । पूर्वे देवमुख आग्नेये सप्तजिह्व दक्षिणे वैश्वानर नैर्ऋते जातवेदः पश्चिमे अग्ने वायव्ये हुताशन उत्तरे हुतवाहन ईशाने कृष्णवर्त्मन् मध्ये अग्ने सहस्राक्ष शतमूर्धन् शतं ते प्राणाः सहस्रं व्यानाः शतं ते तेजः ऊर्ध्वे ब्रह्मविष्णुमहेश्वरदेवताः कालि करालि मनोजवे सुलोहिते धूम्रे स्फुलिङ्गिनि सुमनसे विश्वचरि ब्रह्माण्डव्यापिनि ज्वालालिङ्गतेजः धूम्रवर्णे नीलवर्णे कपिले विस्फुलिङ्गिनि ज्वाले तेजोवति हव्य-

वाहने कव्यवाहने रौद्रि संहारिणि तापिनि पाचिनि सप्तजिह्वा-
सहित पावक ब्रह्माण्डव्यापकतेजोमयपरमशिवज्वालालिङ्गदेवताः
सोम शुक्र अग्ने महेश्वर ब्रह्मन् आपः भास्कर गौरि दुर्गे कात्या-
यनि महि स्रुक्स्रुवदेवताः इदं वोर्घ्यं नमः। विनायकाय चतुर्विंश०
समालभनं गन्धो नमः ॥ एवं विनायकाय चतुर्विंशतितत्त्वेभ्यः ।
भवायदेवाय ८। पूर्वे देवमुखायेत्यादिसर्वनामानि । पृथिवीतत्त्वाय
अप्तत्त्वाय तेजस्तत्त्वाय वायुत० आकाशत० ॥ शब्दतत्त्वाय आका-
शतन्मात्राय । स्पर्शतत्त्वाय वायुतन्मात्राय । रूपतत्त्वाय तेज-
स्तन्मात्राय। रसतत्त्वाय अप्तन्मात्राय। गन्धतत्त्वाय पृथिवीतन्मा-
त्राय । वाक्तत्त्वाय पाणित० पादत० पायुत० उपस्थतत्त्वाय ।
प्राणाय अपानाय समानाय उदानाय व्यानाय नागाय कूर्माय
कृकराय देवदत्ताय धनञ्जयाय मनसे बुद्ध्यै अहंकाराय प्रकृति-
पुरुषाभ्यां नमः । पृथिव्यप्तेजोवाय्वाकाशेभ्यः पञ्चभूतेभ्यो नमः।
शब्दस्पर्शरूपरसगन्धेभ्यः पञ्चतन्मात्रेभ्यो नमः । वाक्पाणि-

पादपायूपस्थेभ्यः पञ्चकर्मेन्द्रियेभ्यो नमः । श्रोत्रत्वक् चक्षुर्जिह्वाघ्राणेभ्यः पञ्चधीन्द्रियेभ्यो नमः । मनोबुद्ध्यहङ्कारेभ्यो नमः । प्रकृतिपुरुषाभ्यां नमः । सप्तजिह्वासहिताय वैश्वानराय ब्रह्माण्डव्यापकाय तेजोमयाय परमशिवाय अर्घो नमः पुष्पं नमः ॥

अथ स्रुवस्रुचोः पुष्पपूजा– सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति । सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाश तस्मै ॥ सोमाय नमः। अन्नात्परिस्रुतो रसँ ब्रह्मणा व्यपिबत्क्षत्रम् । ऋतेन सत्यमिन्द्रियं विपानँ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु । शुक्राय नमः ॥ अग्निः सप्तिं वाजम्भरं ददात्यग्निर्वीरं श्रुत्यं कर्मनिष्ठम् । अग्नी रोदसी विचरत्समञ्जन्नग्निर्नारीं वीरकुक्षिं पुरन्धिम् । अग्नये नमः ॥ इति स्रुवमूले ॥ ईशानं त्वा शुश्रुमा वयं धनानां धनपते गोमदग्ने अश्ववद्भूरिपुष्टं हिरण्यवदन्नवद्धेहि मह्यम् । महेश्वराय नमः ॥ इति मध्ये । ब्रह्मादेवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगा-

णाम् । श्येनो गृध्राणाँ स्वधितिर्वनानाँ सोमः पवित्रमत्येति रेभन् । ब्रह्मणे नमः इति शिरसि ॥

अथ स्रुचो मूले- आपः पृणीत भेषजं वरूथं तन्वो मम ज्योक् च सूर्यं दृशे । अद्भ्यो नमः [ वरुणाय नमः ] ॥ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षँ सूर्य आत्मा जगतस्तस्थुषश्च । भास्कराय नमः इति मध्ये ॥ रन्ध्रद्वये, इन्द्रं कुत्सो वृत्रहणं शचीपतिं काटे निबाळ ऋषिरह्वदूतये । रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ इन्द्रं मित्रं वरुणमग्निमूतये मारुतं शर्धो अदितिं हवामहे । रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने । सरस्वतीं सुकृतो अह्वयन्त सरस्वती दाशुषेवार्यं दात् ॥ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतान्नो भरीमभिः । गौर्यै नमः दुर्गायै नमः कात्यायन्यै नमः

मह्यै नमः स्रुक्स्रुवदेवताभ्यः अर्घो नमः पुष्पं नमः ॥ एताभ्यो-ऽग्निकुण्डज्वालालिङ्ग स्रुक्स्रुवदेवताभ्यो धूपो नमः दीपो नमः वासो० स्रुक्स्रुवयोः कङ्कणं । एवं दक्षिणान्तं । नैवेद्यं ॥

अथ स्रुक्स्रुवप्रतिपादनम् । सावित्राणि सावित्रस्य देवस्य त्वा स० अद्य० आत्मनो० यज्ञसाफल्यद्वारा सर्वात्मकविष्णुप्रीत्यर्थं ब्राह्मणाय स्रुक्स्रुवौ प्रतिपादयामि ३ प्रतिगृह्णामि ३ ॥ त्रातार-मिन्द्रमवितारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः । १ । इन्द्रं कुत्सो वृत्र-हणं शचीपतिं काटे निबाढ ऋषिरह्वदूतये । रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन । २ । चित्तिः स्रुक्चित्त-माज्यं वाग्वेदिराधीतं बर्हिः । केतोरग्निर्विज्ञातमग्निर्वाचस्पति-र्होता मन उपवक्ता प्राणो हविः सामाऽध्वर्युरिन्द्रं गच्छ नमः ३ स्रुवं दक्षिणहस्तस्थं ब्राह्मणदक्षिणहस्ते प्रतिपादयेत् । कया न श्चित्र आभुवदूती सदावृधः सखा कया शचिष्ठया वृता ॥ अन्नात्परि-

स्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्रम् ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु । ब्रह्मा देवानां पदवीकवीनां० स्रुचं वामहस्तस्थां ब्राह्मणवामहस्ते प्रतिपादयेत् । ततोऽञ्जलिनाभ्यर्थना । पृथिवी शान्तिरन्तरिक्षं शान्तिर्द्यौः शान्तिर्दिशः शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिः त्वयाहं शान्त्या सर्व शान्त्या मह्यं द्विपदे चतुष्पदे शान्तिं करोमि शान्तिर्नो अस्तु शान्तिरसीति शान्तिः शान्तिः शान्तिः ॥ [ ततोऽग्निं प्रार्थयेत् ] । सप्तहस्तश्चतुःशृङ्गः सप्तजिह्वो द्विशीर्षकः । त्रिपात्प्रसन्नवदनः सुखासीनः शुचिस्मितः १ । यावद्धोमं तथा यज्ञं करिष्ये त्वदनुज्ञया । तावत्कालमिहातिष्ठ वह्ने विघ्नं निवारय २ । (ततोग्निकोणे धमयेत्) ओं हुं हुतभुजे नमः ३ ॥

[ अथ समित्पूजा ] । ओंभूर्भुवःस्वर्मंत्रेण समिधो ह्यानयेद्बुधः ॥ [ आदौ नमस्कारः ] । पृथिवी समित्तामग्निः समिन्धे तामहं समिन्धे सा मा समिद्धा सुषमिद्धा तेजसा वर्चसा यशसा ब्रह्म-

वर्चसेन समिन्धयात् १। अन्तरिक्षं समित्तां वायुः समिन्धे तामहं समिन्धे० २। द्यौः समित्तां सूर्यः समिन्धे तामहं० ३। ओषधीनां पते सोम हव्यकव्येष्वऽयुक्तताम् । यथातथा गतां सम्यग्दूरीकुरु नमोस्तुते ॥ ततो दर्भकाण्डद्वयं प्रज्वाल्य तदुपर्यावर्तयेत् । येन देवा ज्योतिषोर्ध्वा उदायन्येनादित्या वसवो येन रुद्राः । येनाङ्गिरसो महिमानमानशुस्तेनैतु यजमानाय स्वस्ति ॥ ततो घृतधारापातं कुर्यात्- समिधाग्निन्दुवस्यत घृतैर्बोधयतातिथिम् अस्मिन्हव्या जुहोतन ॥ क्षीरेणाप्लाव्य- यदन्तरिक्षस्य यद्दिवो अनामृतं सम्बभूव ते सचा । तदग्निरग्नयेदद्त्तस्मिन्नाधीयतामयम् ॥ [ ततः पूजा ] हव्यै कव्यै कुरुकुल्लायै सिन्धव्यै सिंह्यै अमृतवासिन्यै अमृतरूपिण्यै पावकवर्धिन्यै वह्निप्रियायै। गन्धादि नैवेद्यान्तमर्चयित्वा प्रणमेत् ॥ ( श्रुतिः ) हव्यं प्रीणीहि हव्यं श्रीणीहि हव्यं अपय हव्यं पच हव्यमसि हव्यंत्वा हव्यवाडसि हव्यं सीद स्वर्यकृच्छ्रान्नः सुगमं प्रयासि सुश्रृङ्गोवृषभः

शुभा वाचा ॥

तिस्रः समिधोऽग्नौ दद्यात् । समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । अस्मिन्हव्या जुहोतन ॥ उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते तव ज्योतींष्यर्चयः ॥ उपत्वाग्ने दिवे दिवे दोषा वस्तर्धिया वयम् । नमो भरन्त एमसि ॥

ततो गुरुपूजनम् । बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसर्त प्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः । तथैव भव यज्ञेऽस्मिन्नाचार्यवर सुव्रत ॥ यथा चतुर्मुखो ब्रह्मा सर्वलोके द्विजोत्तमः । तथा त्वं मम यज्ञेऽस्मिन् ब्रह्मन्सन्निहितो भव ॥ इति नमस्कारः । गुरवे आचार्याय इति गन्धादि नैवेद्यान्तं पूजनम् ॥ [ ततः पुस्तक पूजा ] सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने । सरस्वतीं सुकृतो आह्वयन्ते सरस्वती दाशुषो वार्यादात् । लक्ष्म्यै मेधायै धरायै तुष्ट्यै पुष्ट्यै गौर्यै प्रभायै मत्यै

वागीश्वर्यै वाग्देवतायै सरस्वत्यै । गन्धादि नैवेद्यान्तमर्चयित्वा अग्निभद्रं पठेत् ॥ अग्नये समनमत० । वायवे० । सूर्याय० वरुणाय० साम्ने० ब्रह्मणे० राज्ञे० रथाय समन० ॥

आदौ बीजवापनम् । उत्तरतः संस्तीर्णे० । सावित्राणि० प्रजापतये जुष्टं निर्वपामि । विष्णोर्मनसेति० सावित्राणि० प्रजापतये जुष्टं प्रोक्षामि । पात्राणि च तूष्णीं० पृश्न्याः पयोऽसि० । इदं हविः प्रजननं० आज्यदर्शनं । आत्मनो वाङ्मनः० सुतस्य मौञ्जीबन्धननिमित्तं प्रजापतये अग्नये वैश्वानराय इदमाज्यमर्पयामि नमः ॥ आघारादाज्यभागान्तंहुत्वा । यजमानपत्नीमानीय । या आपो दिव्याः पयसा सम्बभूवु र्या अन्तरिक्ष्या उत पार्थिवासः । तासां त्वा सर्वासां रुचाभिषिञ्चामि वर्चसा ॥ अभि त्वा वर्चसासिचं यज्ञेन पयसा सह । यथासो मित्रवर्धनस्तथा त्वा सविताकरत । इन्द्रं विश्वा अवीवृधत्समुद्रव्यचसं गिरः रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥ [ ऋतौ चतुर्थ्यां

स्नातायां निशि प्राजापत्यं चरुं श्रपयित्वा । ] स्थालीपाकेन प्रधानं । तेजोसि० प्रजापते नहि त्वदन्य एता विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् स्वाहा । तत ऋतुतिथियागादितन्त्रसमाप्तिः । अग्निं विमुच्य ॥ इति बीजवापनम् ॥ १ ॥

अथ सीमन्तोन्नयनम् ॥ अग्निं परिसमुह्य पर्युक्ष्य परिषिच्य ९ आदौ पञ्च० । उत्तरतः संस्तीर्णे० सावित्रादिना यथा दैवतं० न निर्वापः । पृश्न्याः पयोसि ० आज्यदर्शनम् । आत्मनो० सुतस्य मौञ्जी० सीमन्तकरणयागदेवताभ्योऽग्नये वैश्वा० इदमाज्यं० आघाराद्याज्यभागान्तं हुत्वा । [ तृतीये गर्भमासे सीमन्तं कारयते शुक्लपक्षस्य पुण्याहे पर्वणि वा यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा । पश्चादग्नेर्दर्भेषु प्राङासीनायाः सर्वान्केशान्प्रमुच्य प्रसाधयते यं सीमन्तमिति । ] यं सीमन्तं कंकतस्ते चकार यद्वा क्षुरः परिवर्ज वपंस्ते । स्त्रीषु रूपमश्विनौ

तन्निधत्तं पौंस्नेनेमं संसृजतं वीर्येण ॥ इन्द्राणी चक्रे कङ्कतं ससीमन्तं विसर्पतु । पुनः पतिभ्यो जायान्दा अग्ने प्रजया सह ॥ पुनः पत्नीमग्निरदादायुषा सह वर्चसा । दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् इति, ॥ ( त्रिःश्वेतया शलल्या शमीशाखया सपलाशया वा सीमन्तं विचिनोति ] ॥ "ललाटमध्यादारभ्य कृकाटिकां यावद्द्विधा करोति इत्यर्थः" ( समिद्‌द्वयं त्यक्त्वा हस्तौ प्रक्षालयेत् ) । "यास्ते राके इत्यथास्याः पृथक्केशपक्षौ सन्नह्यति" । यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥ ( नीललोहितेन सूत्रेण केशान् ग्रन्थयेत् ) । नीललोहितं भवति कृत्या [1]शक्तिर्व्यज्यते । एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यताम् ॥ ( यजमानपत्न्याः ) या आपो दिव्याः [ यजमानपत्नीतिलकमाज्यदर्शनं च ] । तेजोसीति चतु-

१ शक्तिर्गर्भस्य पुंस्त्वं । सक्तिरित्यपि पाठः

गृहीतेनाज्यप्रधानम् । ये के च ज्मा महिनो अहिमाया दिवो जज्ञिरे अपां सधस्थे । तेअस्मभ्यमिषये विश्वमायुः क्षप उस्रा वरिवस्यन्तु देवाः ॥ तत ऋतुतिथियागादितन्त्रसमाप्तिः ॥ विमुच्य नयामि । यो गुरुस्तमर्हयेदेतदेव कुमारीणां सटोद्धरणमत्रैवा-[१]नुलेपनम् ॥ इति सीमन्तोन्नयनम् ॥ २ ॥

अथ पुंसवनम् । अग्निं परिसमुह्य पर्युक्ष्य परिषिच्य । आदौ पञ्च० । उत्तरतः संस्तीर्णे० सावित्राणि० । पृथक् २ चरुत्रयम् । अग्नये जुष्टं निर्वपामि । इन्द्राय जुष्टं निर्वपामि । विष्णवे जुष्टं निर्वपामि । विष्णोर्मनसेति० सावित्राणि० अग्नये जुष्टं प्रो० । इन्द्राय जुष्टं प्रो० । विष्णवे जुष्टं प्रो० । पात्राणि च० । पृश्न्याःपयोऽसि० । आत्मनो० अग्नये इन्द्राय विष्णवे पुंसवनदेव० अग्नये वैश्वा० इदमाज्यं० । आज्यभागान्तं हुत्वा । या आपो दिव्याः यजमानपत्न्याः ॥ [ अथ पुंसवनं भूयिष्ठ-

१ अनुलेपनं सीमन्तशोभाधायि कुङ्कुमप्रभृतिभिः । अनवलोभनमित्यपि पाठः तच्च गर्भरक्षार्थं कर्मान्यगृह्योक्तम् ।

गतेषु गर्भमासेषु त्रीन् स्थालीपाकान् श्रपयेत् आग्नेयं ऐन्द्रं वैष्णवं च तेषां यथादैवतं जुहोति ।] "अग्निस्तुविश्रवस्तममिति स्थालीपाकस्य।" तजोसि० । अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम् । अतूर्त्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे स्वाहा ॥ [पुमानग्निरितिस्रुवेणाज्यहोमः ।] पुमानग्निरजायत पुंमांसं जनयेत्पुत्रं दशमे मासि सूतवे, येन जातेन विभुना जीवेम शरदः शतं पश्येम शरदः शतम्, इति तन्नो मंहस्व शतिनं सहस्रिणं गोसनिमश्वसनिं वीरम् स्वाहा ॥"इन्द्रत्त्वमिति स्थालीपाकस्य ।" तजोसि०। इन्द्र त्त्वमभि वामभोजोऽजायथा वृषभश्चर्षणीनाम् । अपानुदो जनममित्रयन्तमुरुं देवेभ्यो अकृणोरु लोकम् स्वाहा ॥ (पुमानिन्द्र इति स्रुवेणाज्यहोमः।) पुमानिन्द्रो अजायत पुमांसं० [इत्यादिसर्वमुपरितनवत]॥ (प्र तद्विष्णुरिति स्थालीपाकस्य।) तेजोसि०। प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठः। यस्योरुषु त्रिषु विक्रमणेष्वाधि क्षियन्ति भुवनानि विश्वा स्वाहा ॥ (पुमान्वि-

ष्णुरिति स्रुवेणाज्यहोमः,, । पुमान्विष्णुरजायत पुमांसं जनयेत्पुत्रं दशमे मासि सूतवे. येन जातेन विभुना जीवेम शरदः शतं पश्येम शरदः शतम्, इति तन्नोमंहस्व शतिनं सहस्रिणं गोसनिमश्वसनिं वीरं स्वाहा ॥ तत ऋतुतिथियागादितन्त्रसमाप्तिः । विमुच्य० नयामि० ॥ इति पुंसवनम् ॥ ३ ॥

अथ जातकरणम् ॥ परिसमुह्य पर्युक्ष्य परिषिच्य । आदौ पश्च० । उत्तरतःसंस्तीर्णे० ॥ न निर्वपणम् । पृश्न्याःपयोऽसि० । आत्मनो० सुतस्य मौञ्जी० जातकरणदेव० अग्नये वैश्वा० इदमाज्यम० ॥ आज्यभागान्तं हुत्वा ॥ या आपो दिव्याः यजमानपत्न्याः । (पुत्रे जाते नाम धीयते घोषवदाद्यन्तरन्तःस्थं चतुरक्षरं यथोपपत्ति वा । अग्निमत्रानीय तस्मिन्नाज्यभागान्तं हुत्वा सहिरण्ये कांस्ये सम्पातान्[1]नवनयेत[2] ॥ चतुर्गृहीतेनाज्येनाष्टौ प्रधानाहुतीर्जुहुयात) । हिरण्यगर्भ इति-ऋषिपुत्राणाम् । संवत्सरस्येति

१ हुतशेषबिन्दून् २ स्रावयेत् । पुत्रबहुत्वे पृथक् पात्रेषु ।

जनयत आत्रेयस्य । हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम स्वा "इत्यग्नौ" हा ( इति सहिरण्यकांस्ये प्रतिमंत्रं आहुतिशेषमवनयेत् ) ॥ १ ॥ संवत्सरस्य प्रति मां ये त्वा रात्र्युपासते । तेषामायुष्मतीं प्रजां रायस्पोषेण संसृज स्वा-, हा ॥ २ ॥ काय स्वा-, हा ॥ ३ ॥ कस्मै स्वा-, हा ॥ ४ ॥ कतमस्मै स्वा-, हा ॥ ५ ॥ प्रजापतये स्वा-, हा ॥ ६ ॥ "प्रजापते इति द्वाभ्याम् ।" प्रजापते नहि त्वदन्यः एता विश्वा जातानि परिताबभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु स्वा-, हा ॥७॥ असा अमुष्य पुत्रोऽमुष्यासौ पुत्रो वयं स्याम पतयो रयीणां स्वा-, हा (देवदत्तो यज्ञदत्तस्य पुत्रो यज्ञदत्तस्य देवदत्तः पुत्रो वयं स्याम पतयो रयीणां स्वा-, हा )॥८॥ बहुत्वे पृथगाहुतिः ॥ "अग्नेरायुरसीति हिरण्येन मुखं मेध्यं कृत्वा" । अग्नेरायुरसि तस्य ते मनुष्या आयुष्कृतस्तेनास्मा अमुष्मा अमुकदेवायायुर्व-

हि । (पितृहस्तेन स्वस्वपात्रतः) (पाणिना मुखमद्भिः संस्पृश्य प्रक्षाल्य स्तनावनुमन्त्रयते पतिः स्वस्त्रियाः ) ॥ मधु वात इति प्रत्यृचमृगुभावुत्तमया नारायणस्यार्षम् ॥ मधु वात ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । (इति दक्षिणस्तनमनुमन्त्रयेत) मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः। मधु द्यौरस्तु नः पिता । (इति वामस्तनं) । मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः । (इत्युभौ) । (ततो हिरण्येन सम्पातान्सन्निघृष्य मधु चेत्येके तन्मुखेकृत्वा प्रपाययति । आयुर्धयेति (बालकस्य नाम संगृह्य) सप्तभिराज्यं स्तनौ च पाययेत् स्वस्वपात्रतः पृथक् २) । "अमुकदत्त" आयुर्धय । जरान्धय । सत्यन्धय । श्रियन्धय । ऊर्जन्धय । रायस्पोषन्धय । ब्रह्मवर्चसं धय । जीव शरदः शतं पश्य शरदः शतम् । "इति मूर्ध्नि निघ्राप्य बोधश्चमेति स्वस्त्ययनं वाचयति" । बोधश्च मा प्रतीबोधश्च पुरस्ताद्गोपायताम् । अस्वप्नश्च माऽनव-

द्राणश्च दक्षिणतो गोपायताम् । गोपायमानो मा रक्षमाणश्च पश्चिमतो गोपायताम् । जागृविश्च माऽरुन्धती चोत्तराद्गोपायताम् । अनमित्रं नो अधरागऽनमित्रमुदक्कृधि । इन्द्राऽनमित्रं नः पश्चाद्ऽनमित्रं पुरस्कृधि । अनमित्रैरहोभिः सचीमहि विश्वेदेवाः । अनमित्रा न उशसः सन्तु निम्रुचः । याः षड्डुर्वीः पञ्च प्रादिशस्ता नःपान्तु, मित्रधा नो मित्रे दधात अभयं नो अस्तु, ये रात्रीमनुतिष्ठथ ये च भूतेषु जागृथ, पशून्ये सर्वान्रक्षथ तेन आत्मसु जागृत ॥ बोधप्रतीबोधाऽस्वप्नानवद्राणगोपायमान रक्षमाण जागृवेरुन्धति, ये देवास्तनूपा स्थ ते म इह तन्वम्पात, बोधप्रतीबोधेत्यसौ वा आदित्यो बोधः, प्रतीबोधोग्निः, स्वप्नाणवद्राणेति चन्द्रमा वा अस्वप्नोयं य्यः पवते सोनवद्राणो गोपायमानरक्षमाणेत्यहर्वै गोपायमानो रात्रीरक्षमाणो जागृवेरुन्धतीति यज्ञो वै जागृविर्दक्षिणारुन्धत्येते वै देवा राष्ट्रभृतस्तानेवेट्ट आत्मनो गोपीथाय इति ॥ मंत्रार्थाः० ॥ तत ऋतुतिथ्यादि तत्र-

समाप्तिः ॥ विमुच्य० नयामि० ॥ इति जातकरणम् ॥४॥

अथ नामकरणम् ॥ अग्निं परिसमुह्य पर्युक्ष्य परिषिच्य । आदौ पञ्च० ॥ उत्तरतः सं० । सावित्राणि० काय प्रजापतये नामकरणदेवताभ्यो जुष्टं निर्वपामि । विष्णोर्मनसे० एवं प्रोक्षामि आज्यदर्शनं । आज्यभागान्तं हुत्वा ॥ (दशम्यां व्युष्टायां तस्मिन्नेवाग्नौ पयसि स्थालीपाकं श्रपयित्वा) । सर्वगन्धैः फलोत्तरैः [1]सशिरस्कं स्नापयित्वाऽहतेन वाससा प्रच्छाद्य । या आपो दिव्याः० । (बालकस्य मन्त्रस्नानम्) ॥ "स्थाली पाकस्य जुहोति" कयानश्चित्र–इति द्वे व्रतस्य गायत्री । तेजोसि० ॥ कया नश्चित्र आभुवदूती सदा वृधः सखा । कया शचिष्ठया वृता स्वाहा ॥१॥ कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृढा चिदारुजे वसु स्वाहा ॥ २ ॥ कयातदिति तृस्वानाम् । कया तच्छृण्वे शच्या शचिष्ठो यया कृणोति मुहुः काचिदृष्वः । पुरु दाशुषे

---

१ पुंलिङ्गनिर्देशः स्त्रियं वर्जयति ।

विचयिष्ठो अंहोथादधाति द्रविणं [1]जनित्रे स्वाहा ॥ ३ ॥ प्रजापतये स्वाहा ॥ ४ ॥ प्रजापते नहि त्वदन्य० ॥ ५ ॥ असावमुष्येत्यादि० (देवदत्तो यज्ञदत्तस्य पुत्रो यज्ञदत्तस्य देवदत्तः पुत्रो वयं स्याम पतयो रयीणां स्वाहा) ॥ ६ ॥ तत ऋतुतिथ्यादि । परिते दूळ भोरथो अस्मां अश्नोति विश्वतः । येन रक्षसि दाशुषः ॥ सावित्राणि० काय प्रजापतये नामकरणदेवताभ्यो नमो नैवेद्यं निवेदयामि नमः । इत्यन्तं कृत्वा ॥ अग्नेरायुरसीति तुल्यमाललाटाभिमर्शनात् । तदेव नामधीयते । अन्यादित्येके ॥ अग्नेरायुरसि तस्य ते मनुष्या आयुष्कृतस्तेनास्मा अमुष्मा (अमुकदेवाय) आयुर्धेहि । ततः प्राक्स्विष्टकृतः कांस्ये पूतमाज्यमासिच्य हिरण्यं चाबन्धनीयं बहिस्तान्त्रिकेण विधिनाज्यं "पृश्न्याः पयोसि, इत्यादिना युजुषे युजुषे इत्यन्तं" संस्कृत्य । अग्नेरायुरसीति अवधाय[2] (यजमानः बालश्च कांस्ये हिरण्येनाज्यं

१ जरित्रे २ घृते हिरण्यम् । अस्मै-यजमानाय । अमुष्मै-बालकाय च ।

वीक्ष्य) । अग्नेरायुरसि तस्य ते मनुष्या आयुष्कृत स्तेनास्मा अमुष्मा-(अमुकदेवाय) आयुर्धेहि ॥ इन्द्रस्य प्राण इति पञ्चभिः स्रुवेण तस्य जुहोति ॥ इन्द्रस्य प्राणः स ते प्राणं ददातु यस्य प्राणस्तस्मै ते स्वाहा ॥ १ ॥ पितॄणां प्राणस्ते ते प्राणं ददतु येषां प्राणस्तेभ्यो वः स्वाहा ॥२॥ मरुतां प्राण ॥३॥ विश्वेषां देवानां ॥४॥ प्रजापतेः प्राणः स ते प्राणं ददातु, परमेष्ठिनः प्राणः स ते प्राणं ददातु ययोः प्राणस्ताभ्यां वां स्वाहा ॥ ५ ॥ (ततः इळामग्ने इत्यतः आश्रावितेत्यन्तं हुत्वा) । (ततः प्राक्संस्थितयजुषो ब्रह्मा घृते हिरण्यमवपद्यते । सर्वे च ऋत्विजो यदसर्प इति ॥) यदसर्पस्तत्सर्पिरभवो यन्नवमैस्तन्नवनीतमभवो यदाघ्रियथास्तद्घृतमभवः, घृतस्य धारामम‍ृतस्य पन्थामिन्द्रेण दत्तं प्रयतं मरुद्भिः, तत्त्वा विष्णुरन्वपश्यत्तत्त्वेळा गव्यैरयत् ॥ (पावमानेत्याज्यात्सुवर्णमुद्धृत्य ॥ ) पावमानेन त्वा स्तोमेन गायत्र्या वर्तन्योपांशोर्वीर्येणोद्धराम्यसौ ॥ १ ॥ अमुकदेव । (असौ शब्दस्थाने कुमारस्य आमन्त्र-

णप्रथमान्तं नाम ग्राह्यम् ) ॥ बृहता त्वा रथन्तरेण त्रिष्टुभा वर्तन्या शुक्रस्य वीर्येणोत्सृजाम्यसौ अमुकस्वामिन् ॥ २ ॥ अग्ने-स्त्वा मात्रया जगत्या वर्तन्या देवस्त्वा सवितोन्नयतु जीवातवे जीवनस्याया असौ ॥ ३ ॥ अमुकशर्मन् ॥ ( देवा आयुष्मन्त इति षड्भिर्यजमानाय प्रयच्छति ॥ ) देवा आयुष्मन्तस्तेऽमृतेनायु-ष्मन्तस्तेषामयमायुषायुष्मानस्त्वसौ अमुकछन्दः ॥ १ ॥ (असौ शब्दस्थाने शिशोः प्रथमान्तं नाम ग्राह्यम् ) । ब्रह्मायुष्मत्तद्ब्रा-ह्मणैरायुष्मत्तस्यायमायुषायुष्मानस्त्वसौ ॥ अमुकदत्तः ॥ २ ॥ अग्निरायुष्मान् स वनस्पतिभिरा० । अमुकस्वामी ॥ ३ ॥ यज्ञ आयुष्मान् स दक्षिणाभिरा० । अमुकदेवः ॥ ४ ॥ सोम आयु-ष्मान् स ओषधीभिरा० । अमुकशर्मा ॥ ५ ॥ ओषधय आयु-ष्मतीस्ता अद्भिरायुष्मतीस्तासाम० । अमुकसोमः ॥ ६ ॥ ततिप-वत्यायुरेव ततिपवति यदेव तस्य तन्निर्[१]वधयेदिति ॥ [हिरण्या-

१ निःशेषेण पिवेत् ।

द्घृतं प्रक्षाल्य इममग्न इति कण्ठे आबध्नाति सुवर्णं ]॥ इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण संशिशाधि । मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासत् ॥ ( तस्य ललाटमभिमृश्याश्विनोः प्राण इति जपति ।) अश्विनोः प्राणस्तौ ते प्राणं दत्तां तेन जीव । मित्रावरुणयोः प्राणस्तौ ते प्राणं दत्तां तेन जीव । बृहस्पतेः प्राणः स ते प्राणं ददातु तेन जीव ॥ " बालकालिङ्गनं पित्रोरङ्गादिति " ॥ अङ्गादङ्गात्संभवसि हृदयादभिजायसे । आत्मा वै पुत्रनामासि जीव शरदः शतं पश्य शरदः शतमिति मूर्ध्नि निघ्राप्य, पूर्णां दत्त्वा ॥ मा नस्तोके० ॥ पश्चात् बोधश्च मा इति स्वस्त्ययनं वाचयति ॥ विमुच्य० । नयामि ॥

इति नामकरणम् ॥ ५ ॥

अथ सूर्यदर्शनम् ॥ परिसमुह्य पर्युक्ष्य परिषिच्य । आदौ पञ्च० । उत्तरतः संस्तीर्णे० सावित्राणि० मित्राय जुष्टं निर्वपा-

१ ऋत्विक् पितुः प्रयोजकः ।

मि । विष्णोर्मनसेति० एवं प्रोक्षामि आज्यदर्शनं । आत्मनो० मित्राय अग्नये वै० इदमाज्यमर्प० । आज्यभागान्तं हुत्वा ॥ (तृतीयेऽर्धमासे दर्शनमादित्यस्योदिते त्वादित्ये रथचक्रमात्रं स्थण्डिलमुपलिप्य तस्मिन्यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा । तरणि र्दिवोरुक्म उदुत्यांश्चित्रन्देवानामिति स्रुवेणाज्यस्य जुहोति । तरणिरिति-ऋषिपुत्राणामार्षम् । ) तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमाभासि रोचनम् स्वाहा ॥ १ ॥ दिवो रुक्म उरुचक्षउदेति दूरेअर्थस्तरणिर्भ्राजमानः । नूनं जनः सूर्येण प्रसूता अयन्नर्थानि कृणवन्नपांसि स्वाहा ॥ २ ॥ दिव्यस्य शाकरस्य । उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यं स्वाहा ॥ ३ ॥ चित्रन्देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्राद्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च स्वाहा ॥ ४ ॥ ततः सूर्यपूजनम् ॥ (मण्डलं वर्तुलं कृत्वा दर्शने सोम-

१ अष्टाचत्वारिंशदङ्गुलपरिमाणं

सूर्ययोः । नवरेखाः प्रकर्तव्या अर्चयेन्मौञ्जिबन्धने ॥ अष्टचत्वारिंशदङ्गुलपरिमाणं प्रतिदिशं सोमसूर्यमण्डलं कार्यम् । द्वादशाङ्गुलमध्ये पूजनं कार्यम् । तच्चोक्तं– " नवरेखास्तु कर्तव्याः कुर्यात्सूर्येन्दुमण्डलम् । द्वादशाङ्गुलमध्ये तु यत्नेन पूजयेत् क्रमात् " ॥ संव्वः सृजामि० । अश्विनोः० । गायत्र्यै नमः० ३ । भास्कराय विद्महे सहस्ररश्मये धीमहि । तन्नः सूर्यः प्रचोदयात् । ३ । अद्यतावत्० । मित्रस्य सानुचरस्य आत्मनो० सुतस्य मौञ्जीबन्धननिमित्तं अर्चामहं करिष्ये ॐ कुरुष्व । मित्रस्य सानुचरस्येदमासनं नमः । मित्राय सानुचराय त्वां पूजयामि ॐ पूजय । मित्रं सानुचरमावाहयिष्यामि ॐ आवाहय ॥ आवाहयाम्यहं देवं भानुं सर्वजगद्गुरुम् । अरुणः सारथिर्यस्य सप्ताश्वरथवाहनः ॥ प्रीयतां यजमानस्य तुष्टो भूयाज्जगत्पतिः । रक्तवर्णो महातेजा रक्तस्रग्दामभूषितः । बलिः पुष्पं चरुश्चैव० । यवान्विकीर्य । शन्नो देवी० । लाजा गन्धो वचा कुष्टं वालुकं

पद्मकेसरम् । नागकेसरसंयुक्तं पाद्यमेतत्प्रकल्पयेत् । मित्राय सानुचराय पाद्यं नमः ।(पुनः) शन्नो देवी० । कुङ्कुमागुरुकर्पूरचन्दनैश्च सुगन्धिभिः । मृगजातीसमायुक्तैरर्घ्यमेतत्प्रकल्पयेत् । मित्र सानुचर इदं वोऽर्घ्यं नमः । मित्राय सानुचराय समालभनं गन्धो नमः ॥ एवमर्घो नमः पुष्पं नमः । दक्षिणान्तं । अमृतमस्तु० सावित्राणि० । ॐ नम आदित्याय कश्यपपुत्राय अदितेर्गर्भसम्भूताय रक्तवर्णाय रक्ताम्बरचीरवाससे तपसोग्ररूपधराय भक्तिभावनाय आरुह्य मेरुं प्रदक्षिणं कृत्वा ग्रहमण्डलं प्रविश्य इत्यक्षतगन्धपुष्पधूपदीपसुवर्णरचितं बलिं निवेदयामि स्वगणैः परिवृतः प्रीतमानसो भव अमृतं ते नमः ॥ मित्राय सानुचराय नमो नैवेद्यं निवेदयामि नमः । (मित्रो जनान्यात० । प्रसमित्र० इति स्थालीपाकस्य) तेजोसि० ॥ मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाभिचष्टे मित्राय हव्यं घृतवद्विधेम स्वाहा १ ॥ प्र स मित्र मर्त्तो अस्तु प्रय-

स्वान्यस्त आदित्य शिक्षति व्रतेन । न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात् स्वाहा २ ॥ ( अभ्यावर्तस्वेति कुमारमभ्युदानयति[1] शार्यातस्य माणवकस्य । ) अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह । वपां ते अग्निरिषितो आरोहत् । ( द्रष्ट्रे नम इति अदृश्रन्निति चोपस्थानम् ) ॥ घोराणामार्षम् ॥ द्रष्ट्रेनम उपद्रष्ट्रे नमोऽनुद्रष्ट्रे नमः ख्यात्रे नमः उपख्यात्रे नमोऽनुकशात्रे नमः शृण्वते नम उपशृण्वते नमः सते नमोऽसते नमो जाताय नमो जनिष्यमाणाय नमो भूताय नमो भविष्यते नमश्चक्षुषे नमः श्रोत्राय नमो मनसे नमो वाचे नमो ब्रह्मणे नमः श्रान्ताय नमस्तपसेनमः ॥ अदृश्रन्नस्य केतवो विरश्मयो जनाननु । भ्राजन्तो अग्नयो यथा ॥ ( सर्पिष्मदन्नं ब्राह्मणान्भोजयेत् ) ।

त ऋतुतिथ्यादि–तंत्रसमाप्तिः ॥ विमुच्य ३ ॥ नयामि० । इति सूर्यदर्शनम् ॥ ६ ॥

---

१ अभिमुखं कृत्वोन्नमय्यानयति

अथ चन्द्रदर्शनम् ॥ अग्निं परिसमुह्य पर्युक्ष्य परिषिच्य । आदौ पञ्च० । उत्तरतः० सावित्राणि० सोमाय जुष्टं निर्वपामि । विष्णोर्मनसेति० । एवं प्रोक्षामि । आज्यदर्शनम् । आज्यभागान्तं हुत्वा ॥ स्रुवेण मत्नूदाता, भूयो जात इत्याज्यस्य जुहोति ॥ [1]मत्नूदाता मातरिश्वा वचोभिश्चन्द्रो अमृताद्वर्धते जायमानः । आयुः प्रजाममृतं सौभगत्वं प्र चन्द्रमास्तिरते दीर्घमायुः, स्वाहा १ भूयो जातो हविषश्चन्द्रअस्मात्पूर्णः पुरस्तात्पयसो हविर्भिः । पयो गर्भो देवताः पिन्वमानश्चन्द्रोऽमृतत्वमभयं कृणोतु स्वाहा २ ततः सोमपूजनम् । सूर्यस्योपरिभागे नवरेखात्मकं वर्तुलं सोममण्डलमुल्लिख्य ॥ संव्वः सृजामि० । अश्विनोः० । गायत्र्यै नमः ॐभूर्भुवः स्वः ३ ॥ निशाकराय विद्महे शीतरश्मये धीमहि । तन्नः सोमः प्रचोदयात् ३ अद्य तावत् सोमस्य सानुचरस्य । आत्मनो० सुतस्य मौञ्जीबन्धननिमित्तं अर्चामहं करिष्ये ओं कुरु-

१ पूजितस्य चतुर्थपुरुषार्थस्य दाता । महपूजायामिति धातुः

ष्व । सोमस्य सानुचरस्येदमासनं नमः । सोमाय सानुचराय त्वां पूजयामि ओं पूजय । सोमं सानुचरमावाहयिष्यामि ओंआवाहय । आवाहयाम्यहं देवं चन्द्रं नक्षत्रनायकम् । शम्भोः शिरस्यलंकारं प्रत्यक्षं लोकनायकम् । शुक्लवर्णो० । यवान्विकीर्य ॥ शन्नो देवी० । लाजाश्च० । सोमाय सानुचराय पाद्यं नमः । (पुनः) शन्नो देवी० । आपः क्षीरं० । सोम सानुचर इदं वोऽर्घ्यं नमः । सोमाय सानुचराय समालभनं० । एवं दक्षिणान्तं । सावित्राणि० ओं नमः सोमाय अत्रिपुत्राय अमृतोद्भवाय शुक्लवर्णाय शुक्लाम्बरचीरवाससे तपसोग्ररूपधराय भक्तिभावनाय अरुह्य मेरुं प्रदक्षिणं कृत्वा ग्रहमण्डलं प्रविश्य इत्यक्षतगन्धपुष्पधूपदीपसुवर्णरचितं बलिं निवेदयामि स्वगणैः परिवृतः प्रीतमानसो भव ऋतं ते नमः ॥ सोमाय सानुचराय नमो नैवेद्यं निवेदयामि नमः ॥ आप्यायस्व, सन्ते पयांसीति स्थालीपाकस्य । तेजोसि० । आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथे, स्वाहा १ सन्ते

पयांसि समु यन्तु वाजाः संवृष्ण्यान्यभिमातिषाहः । आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व, स्वाहा २। (अभ्यावर्तस्वेति कुमारमभ्युदानयति शार्यातस्य माणवकस्य ।) अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह । वपां ते [1]अग्नी रिषितो आरोहत् ॥ (यथादित्यं; नवो० इत्युपस्थानम् ।) यथादित्यमादित्या आप्याययन्ति यथाक्षितिमक्षितयो मदन्ति । एवं मामिन्द्रो वरुणो बृहस्पतिराप्याययन्तु भुवनस्य गोपाः ॥ १ ॥ नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् । भागन्देवेभ्यो विदधात्यायन्प्रचन्द्रमास्तिरते दीर्घमायुः ॥ २॥ प्रकाश आदर्शपर्यायः दक्षिणा । तत ऋतुतिथ्यादितन्त्रसमाप्तिः विमुच्य ३ । नयामि ॥ इति चन्द्रदर्शनम् ॥ ७ ॥

अथान्नप्राशनम् । अग्निं परिसमुह्य पर्युक्ष्य परिषिच्य । अदौ पश्च० । उत्तरतः० । सावित्राणि० अन्नपतये जुष्टं निर्वपामि

---

१ अग्निरिषित इत्यपि पाठः ।

विष्णोर्मनसेति० सावित्राणि० अन्नपतये जुष्टं प्रोक्षामि । आज्यदर्शनम्—आत्मनो० अन्नपतये इदमाज्यं० । आज्यभागान्तं हुत्वा । (षष्ठे मासेऽन्नप्राशनं दन्तेषु वा जातेषु सर्वाण्यन्नानि संयूय साधयित्वा आयुर्धा देव, घृतप्रतीक इति च द्वाभ्यां स्रुवेणाज्यहोमः ।) आयुर्धा[1] देव जरसं वृणानो घृतं वसानो घृतपृष्ठो अग्ने । घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसे नयेमं, स्वाहा ॥ १ ॥ घृतप्रतीको घृतपृष्ठो अग्निर्घृताहवनो घृतमस्य धाम । घृतप्रुषो हरितस्त्वा वहन्तु घृतं पिबन्यजताद्देव देवान् , स्वाहा ॥ २ ॥ (अन्नपतेरिति स्थालीपाकस्य ।) तेजोसि० ॥ अन्नपते अन्नस्य नो देह्यऽनमीवस्य शुष्मिणः । प्र प्रदातारं तारिष ऊर्जं नो देहि द्विपदे चतुष्पदे स्वाहा । (अनयैव कुमारमपि अन्नं प्राशयेत्)। [देवाग्रतोथ विन्यस्य शिल्पभाण्डानि सर्वशः । अस्त्राणि सर्वशास्त्राणि ततः पश्येत्तु लक्षणम् । प्रथमं यत्स्पृशेद्बालस्ततो भाण्डं

[1] आयुर्दा इत्यपि पाठः ।

स्वयं तदा । जीविका तस्य बालस्य तेनैव तु भविष्यति ।]
तत ऋतुतिथ्यादितंत्रसमाप्तिः । विमुच्य ३ नयामि ॥ इत्यन्न-
प्राशनम् ॥ ८ ॥

अथ चूडाकरणम् ॥ परिसमुह्य पर्युक्ष्य परिषिच्य । आदौ पञ्च० । उत्तरतः० न निर्वापः । पृश्न्याः पयोसि० । आज्यदर्शनम् । आत्मनो० चूडाकरणयागदेवताभ्य इदमाज्यं० आज्यभागान्तंहुत्वा ॥ [एकस्मिन् शरावे गोमयाक्षोट तिल क्षुर दर्भकाण्डचतुष्काणि निधाय] (तृतीयस्य वर्षस्य भूयिष्ठेषु गतेषु चूडाः कारयते । दक्षिणतः कपुजा वसिष्ठानाम्, उभयतोऽत्रिकश्यपानाम्, मुण्डा भृगवः, पञ्च चूडा आङ्गिरसानाम्, वाजिम[1]एके मङ्गलार्थं शिखिनो[2]ऽन्ये यथाकुलधर्मं वा ॥ शुक्लपक्षस्य पुण्याहे पर्वणि वा यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा ।) अयमगात्सविता क्षुरेणोष्णेन वाय उदकेन एहि । आदित्या रुद्रा वसवः सचेत-

१ वाजि—केशपङ्क्तिम् । २ अमेध्यमेतच्छिरो यदशिखमिति श्रुतिः ।

सः सोमस्य राज्ञो वपत प्रचेतस इत्युष्णा अपोऽभिमन्त्रयते । उष्णाश्च शीताश्च समेत्य सर्वा बृहस्पतिः सविता सत्यधर्मा तदनुमन्यताम् । सोमपुत्रस्याध्वरस्य । आर्द्रदानवः स्थ जीवदानवः स्थोन्दतीरिहैनमवताप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे इत्यभ्युन्देत् । ओषधे त्रायस्वेति दर्भमन्तर्धाय ओषधे त्रायस्वैनम् । स्वधित इति क्षुरेणाभिनिधाय स्वधिते मैनं हिंसीः । येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् ॥ तेन ब्रह्मणो वपतेदमस्यायुष्माञ्जरदष्टिर्यथासत् ॥ अयमसौ अमुकदेवः इति दक्षिणे केशान्ते । (प्रागग्रेण दर्भेण) ॥ १ ॥ एवं । आर्द्रदानवः स्थ जीवदानवः स्थोन्दतीरिहैनमवताप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे इत्यभ्युन्देत् । ओषधे त्रायस्वेति दर्भमन्तर्धाय ओषधे त्रायस्वैनम् । स्वधित इति क्षुरेणाभिनिधाय स्वधिते मैनं हिंसीः । येन धाता बृहस्पतिरग्नेरिन्द्रस्य चायुषे वपत् । तेनास्यायुषे वप सुश्लोक्याय स्वस्तये ॥ अयमसौ अमुकदत्तः इति

पश्चिमे केशान्ते (उदगग्रेण दर्भेण) ॥ २ ॥ आर्द्रदानवः स्थ जीवदानवः स्थोन्दतीरिहैनमवताप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे इत्यभ्युन्देत् । ओषधे त्रायस्वेति दर्भमन्तर्धाय ओषधे त्रायस्वैनम् । स्वधित इति क्षुरेणाभिनिधाय स्वधिते मैनं हिंसीः । येन पूषा प्रजापतेरग्नेः सूर्यस्य चायुषे वपत् । तेनास्यायुषे वप सुश्लोक्याय स्वस्तये ॥ अयमसौ अमुकच्छन्दः इत्युत्तरे केशान्ते (उदगग्रेण दर्भेण०) ॥ ३ ॥ आर्द्रदानवः स्थ जीवदानवः स्थोन्दतीरिहैनमवताप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे इत्यभ्युन्देत् । ओषधे त्रायस्वेति दर्भमन्तर्धाय ओषधे त्रायस्वैनम् । स्वधित इति क्षुरेणाभिनिधाय स्वधिते मैनं हिंसीः । येन भूयश्च रात्री ज्योक् पश्या च सूर्यम् । तेनास्यायुषे वप स्वश्लोक्याय स्वस्तये ॥ अयमसावमुकशर्मा इति पूर्वे केशान्ते (उदगग्रेण दर्भेण) ॥ ४ ॥ ( इति प्रदक्षिणं प्रतिदिशं प्रतिमंत्रं दर्भक्षुरकर्म) यत्क्षुरेण वर्तयता सुपेशसा वप्तर्वपसि केशान् । शुन्धि शिरो

माऽस्यायुः प्रमोषीरिति ( लोहायसं क्षुरं केशवापाय प्रयच्छति ) मा ते केशाननुगात्तेज एतत्तथा धाता दधातु ते । तुभ्यमिन्द्रो बृहस्पतिः सविता वर्च आदधुरिति ( प्रपततोऽनुमन्त्रयते ) ( सुहृत्परिग्राह्यानुप्यमानान्हरितगोमये समवचिनोति ) उप्त्वाय राज्ञो वरुणस्य केशान्सोमो धाता सविता विष्णुरग्निः । तेभ्यो निधानं बहुधान्वविन्दन्नन्तरा द्यावापृथिवी अवस्युः (इति प्रागुदीचीं ह्रियमाणाननुमन्त्रयते ) [1]अरिक्ते पर्याश्लेषयते इतिश्रुतिः । बालकं स्नापयित्वा । या आपो दिव्याः० ॥ चतुर्गृहीतेनाज्यप्रधानं । तेजोसि० । ये के च ज्मा० । तत ऋतुतिथ्यादितन्त्रसमाप्तिः ॥ विमुञ्चामि ३ । नयामि । कर्त्रे वरं ददाति । [2]पद्मगुणं तिलपेशलं केशवापाय प्रयच्छति ॥ सर्पिष्मदन्नं ब्राह्मणान्भोजयेत ॥ इति चूडाकरणम् ॥ ६ ॥

---

१ दूर्वालतादिभरिते शीतप्रदेशे समाश्लेषयते केशान् मित्रम् । २ और्णगुणवेष्टितं तिलपूर्णशरावं नापिताय देयम् । वरमिति दक्षिणाम , साच चतुर्वर्षा गौः । सूक्ष्मगुणमित्यपि पाठः । सूक्ष्मतन्तुं वस्त्रम् ।

अथोपायनम् ॥ अग्निं परिसमुह्य पर्युक्ष्य परिषिच्य । आदौ पञ्च० । उत्तरतःसं० न निर्वापः । पृश्न्याः पयोऽसि० यजमानस्यैव आज्यदर्शनम् । आत्मनो० मेधायै सरस्वत्यै छन्दोभ्यः उपायनदेवताभ्यः अग्नये वैश्वानराय इदमाज्यमर्पयामि नमः । आज्यभागान्तं हुत्वा ॥ (तत्रादौ विद्यारम्भः ॥) लग्नवेलायामेव । शुक्लाम्बरधरं० । धूपदीपादि संकल्पं बालकमाचार्यः कारयेत् । अक्षराणि कुङ्कुमादिना बालकं लेखयित्वा वाचयित्वा च तत्पूजां कारयेत् । लक्ष्म्यै मेधायै धरायै तुष्ट्यै गौर्यै पुष्ट्यै प्रभायै मत्यै वाग्देव्यै सरस्वत्यै इति नामभिः ॥ दक्षिणां च दद्यात् । ततो नैवेद्यम् । प्रार्थना च ॥ करबधिर सदृशमखिलं भुवनतलं यत्प्रसादतः कवयः । पश्यन्ति सूक्ष्ममतयः सा देवी सरस्वती जयति ॥ (प्राङ्मुखो गुरुरासीनो वरुणाशामुखं शिशुम् । अध्यापयीत प्रथमं द्विजाशीर्भिः सुपूरितम् ॥) वासोऽहतं ब्रह्मसूत्रमश्मानं दधि मेखलाम् । आजि-

नं नवनीतं च दण्डं चात्रोपकल्पयेत् ॥ ( सप्तमे वर्षे ब्राह्मणस्योपायनम् । नवमे राजन्यस्य । एकादशे वैश्यस्य । आ षोडशाद्ब्राह्मणस्यानतिक्रमः । आ द्वाविंशाद्राजन्यस्य । आ चतुर्विंशाद्वैश्यस्य । स्नातोप्तकेशे यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा । ) रेवतीस्त्वा व्यक्ष्णन्कृत्तिकाश्चकृतुस्त्वा अपसस्त्वा व्यतन्वत धियोऽवयन्नवग्ना अमृजन्सहस्रमन्तां अभितो[2] देधन्ताऽशीतिर्मध्यमवयन्नु नारीरित्यहतं वासोऽभिमन्त्रयते । देवीर्देवाय परिधे[3] सवित्रे परिधत्त वर्चसे[4] इमं शतायुषं कृणोतु जीवसे कामिति परिधापयति ॥ जरां गच्छ परिधत्स्व वासो भूरापीवानाभिशस्तिपा वा शतं च जीव शरदः पुरूची रायश्च पोषमुपसंव्ययस्व ॥ परीमं सोमं तेजसे महे श्रोत्राय दध्मसि यथैनं जरसं नयज्ज्योक्श्रोत्राय जागरज्ज्योक्श्रोत्रेऽधिजागरादिति ब्राह्मणस्य ॥ ( परीममिन्द्रमोजसे महे क्षत्राय दध्मसि यथैनं जरसं नयज्ज्योक्क्षत्रायजागरज्ज्यो-

१ सूत्रमेखलां कौपीनं च बालकहस्ते संस्थाप्य वाचयति । २ अभितोतयच्छन् अशीतिर् ॥ ३ सविता । ४ वर्चसं नयेमं ।

क्षत्त्रेधिजागरदिति राजन्यस्य ) (परीमं मनुमायुषे महे पोषाय दध्मासि यथैनं जरसं नयज्ज्योकपोषाय जागरज्ज्योकपोषेधिजागरदिति वैश्यस्य ) परीदं वासो [१]ऽधिथाः स्वस्तये भवापीवानभिशस्तिपावा शतं च जीव शरदः सुवीरो वसूनि चोग्रो विभज सुजीवन्निति ( परिहितवाससमनुमन्त्रयते )॥ योगेयोगे युवासुवास इति चैताभ्याम् । योगेयोगे इति कश्यपस्य । योगे योगे तवस्तरं वाजे वाजे हवामहे । सखायमिन्द्रमूतये ॥ युवा सुवासःपरिवीत आगात्स उश्रेयान्भवति जायमानः । तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥ [ततः कृताचमनं [२]यज्ञोपवीतमिति—ब्रह्मसूत्रं परिधापयति ॥ ] यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनह्यामि इति यदा स्वयं परिदध्यात ।

१ अधिधाः । २ शकुनं दध्यन्न तण्डुल लवणादि सर्वत्रात्र ।

ततः कृताचमनं [१]पवित्रपाणिं आब्रह्मन्निति ललाटे तिलकं कारयित्वा [ यदाबध्नन् ]॥ अग्निमभि दक्षिणमानीय । एह्यश्मानमातिष्ठाश्मेव त्वं स्थिरो भव । कृण्वन्तु विश्वेदेवा आयुष्टे शरदः शतम् । इति "दक्षिणेन पदाश्मानमास्थापयति" [ उपवेश्य ] मम व्रते हृदयं ते दधामि मम चित्तमनु चित्तं ते अस्तु । मम वाचमेकव्रतो जुषस्व बृहस्पतिस्त्वा युनक्तु मह्यम् । [ इति नाभिदेशादूर्ध्वं पाणिनोन्मार्ष्टि ] ॥ [ पवित्रं निवार्य ] दधिक्राव्णो "इति त्रिर्दधि भक्षयित्वा" ॥ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत् ॥ ततः कृताचमनं "ब्रह्मचर्यमागामुप मा नयस्वेति वाचयित्वा ॥ " ( पश्चादग्नेर्दर्भेष्वासीनं कृतपादोपसंग्रहणं गुरुः प्रणवं व्याहृतीश्चाध्यापयति ) ॥ "अधीहि भोः ! भूः भुवः स्वः व्याहृतीर्मे भवाननुब्रवीतु" ॥ प्रणवस्य ऋषिर्ब्रह्मा गायत्रं छन्द एव च ।

१ वसोः पवित्रमसीति ।

देवोऽग्निर्व्याहृतिषु च विनियोगः प्रकीर्तितः ॥ प्रजापतेर्व्याहृतयः पूर्वस्य परमेष्ठिनः । व्यस्ताश्चैव समस्ताश्च ब्राह्ममक्षरमोमिति ॥ व्याहृतीनां समस्तानां दैवतं तु प्रजापतिः । व्यस्तानामयमग्निश्च वायुः सूर्यश्च देवताः ॥ छन्दश्च व्याहृतीनामेकाक्षराणामुक्ताख्यं, द्यक्षराणामत्युक्ताख्यमिति बोधयित्वा "ओंभूर्भुवःस्वः" [इति दक्षिणकर्णे श्रावयित्वा त्रिर्वाचयति] । इयं दुरुक्तादिति वाचयन्मेखलां त्रिगुणां त्रिप्रदक्षिणामाबध्नीते । [आचार्यः] इयं दुरुक्तात्परिबाधमाना वर्णं पवित्रं पुनती म आगात् । प्राणापानाभ्यां बलमाभजन्ती सखा देवी सुभगा मेखलेयम् ॥ ऋतस्य गोप्त्री तपसस्तरुत्री घ्नती रक्षः सहमाना अरातिम् । सा नः समन्तमनु परेहि [1]भद्रे भर्तारस्ते मेखले मा रिषाम ॥ श्रद्धाया दुहिता तपसोऽधिजाता स्वसर्षीणां मन्त्रकृतां बभूव । सा मा मेखले परिरेरिहस्व मयि देहि तप इन्द्रियं च ॥ [इति वाच-

---

१ भद्रेया

यन्मेखलामाबध्नाति ] "मौञ्जीं त्रिवृतं ब्राह्मणाय प्रयच्छति । मौर्वीं [1]धनुर्ज्यां राजन्याय । सौत्रीं वैश्याय" ॥ चित्तस्य समोसि द्वैव्यो ग्रन्थिरसि मा विस्रसः [ इति त्रिगुणं प्रचरसंख्यया वा ग्रन्थिं कृत्वा ] ॥ "मित्रस्य चक्षुरित्यजिनम्" । मित्रस्य चक्षुर्धरुणं बलाय तेजो यशस्वि स्थविरं समृद्धम् । अनाहनस्यं वसनं चरिष्णु परीदं वाज्यजिनं दधेयम् (इति वाचयन्नैणेयं चर्म ब्राह्मणाय प्रयच्छति । वैयाघ्रं राजन्याय । रौरवं वैश्याय) ॥ (तच्चक्षुरित्यादित्यमुपस्थापयति) तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतम् ॥ "को नामासीत्युक्ते (गुरुणा) अभिवादने प्रोक्ते असौ अहं भोरिति प्रत्याह" (वटुः) ॥ गुरोः पादावुपसंगृह्य ब्रह्मचार्यभिवादयते । यथा । अभिवादये देवशर्माहं भोः । "इत्येवमभिवादयेत्" ॥ आयुष्मान्भव सौम्य देवशर्म ३ न् "इति प्रत्यभिवादनम्" ॥

१ तत्प्रमाणाम्

(व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः । सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥ अभिवादात्परं विप्रो ज्यायांसमभिवादयेत् । असौ नामाहमस्मीति स्वं नाम परिकीर्तयेत् ॥ भोः शब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने । नाम्नः स्वरूपभावो हि भोभाव ऋषिभिः स्मृतः ॥ आयुष्मान्भव सौम्येति वाच्यः प्रत्यभिवादने । अकारश्चास्य नाम्नोन्ते वाच्यः पूर्वाक्षरप्लुतः । यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् । नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥ ) देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णामि असौ अमुकशर्म ३ न् उंपनयेऽसौ अमुकस्वामिन् ॥ सविता ते हस्तमग्रहीत् अमुकच्छन्दः! अग्निराचार्यस्तवामुकदेव कस्त्वां कमुपनयेऽसौ अमुकशर्मन्! काय त्वा परिददामि अमुकदेव! कस्य ब्रह्मचार्यसि । प्राणस्य ब्रह्मचार्यस्मी " ति प्रत्याह " । एवं । प्रजापतये त्वा परि-

१ प्रत्याभिवादनानन्तरं दक्षिणं साङ्गुष्ठं ब्रह्मचारिहस्तं गृह्णाति अत्रासौशब्दस्थाने सम्बुद्ध्यन्तं नाम सर्वत्र ब्रह्मचारिणो ग्राह्यम् ।

ददामि । देवाय त्वा सवित्रे परिददामि । बृहस्पतये त्वा परिददामि असौ अमुकदत्तः ॥ देव! सवितरेष ते ब्रह्मचारी तं गोपायस्व दीर्घायुः स मामृत ।१। अग्निपुत्रैष ते० ।२। वयुपुत्रैष ते० ।३। सूर्यपुत्रैष ते० ।४। विष्णुपुत्रैष ते० ।५। ब्रह्मपुत्रैष ते० ।६। (ततो ब्रह्मचार्यसि इति पञ्चभिरनुशास्ति । बाढमिति प्रत्याह ॥) ब्रह्मचार्यसि । अपोशान । कर्म कुरु । दिवा मा सुषुप्सीः । वाचं यच्छ । मेधां मह्यमिति वाचयति । मेधां मह्यमङ्गिरसो मेधां सप्तर्षयो दधुः । मेधामग्निश्च वायुश्च मेधां धाता दधातु मे ।१। मेधां मे वरुणो राजा मेधामग्निर्ददातु मे । मेधामिन्द्रश्च सूर्यश्च मेधां देवी सरस्वती ।२। या मेधा अप्सरस्सु गन्धर्वेषु च यन्मनः । दैवी [1]मानुषी या मेधा सा मामाविशतादिह ।३। शरीरं मे विचक्षणं वाङ्मे मधुमद्दुहे । निशामितं निशामये मयि श्रुतम् ।४

१ मनुष्ये ।

यन्मेऽनूक्तं तद्रमतां शकेयं यदनु ब्रुवे, [1]प्रियाः श्रुतस्य भूयास्म मेधया संविधीमहि । अवृधमहमवृधस्त्वमसौ सौम्य प्राणस्तन्मे गोपाय [2]ब्रह्मणस्तदणी स्थ श्रुतं मे मा प्रहासीत् ॥ ५ ॥ (ततो हस्तौ विमुच्य) । बालकस्य आज्यदर्शनम् ॥ आत्मनोवाङ्० मेधायै सरस्वत्यै छन्दोभ्यः उपायनदेवताभ्यः अग्नये वैश्वानराय इदमाज्यमर्पयामि नमः ॥ (एताभिरेव चतसृभिरनुप्रवचनीयाञ्जुहुयात् यजुषोत्तमां छन्दोभ्यः स्वाहेति ऋतुनामधेयेन च यथोपाचरितः ऋतुर्भवति एवं वेदोक्तानि सर्वाणि । मेधां मह्यमिति सप्त प्रधानाहुतीर्वैश्वदेवीं च चतुर्गृहीतेनाज्येन जुहुयात् )॥ मेधां मह्यमङ्गि० ॥ १ ॥ मेधां मे वरुणो राजा० ।२ या मेधा अप्सरःसु० ॥३॥ शरीरं मे० ॥४॥ यन्मेऽनूक्तं० ॥ ५ ॥ छन्दोभ्यः स्वाहा ॥७॥ उपायनाय स्वाहा ॥७॥ ये के च ज्मा । ८। पश्चादग्नेर्दर्भेषु प्राङासीनः प्रत्यङ्ङासीनाय तत्सवितुरिति सावित्रीं

१ प्रियः श्रुतस्य भूयासम् । २ ब्रह्मण अणी स्थ ।

त्रिरन्वाह ॥ तां सवितुरिति राजन्याय । विश्वारूपाणीति वैश्याय । "अधीहि भोः सावित्रीत्रिजपपूर्वानुपायनव्रतमन्त्रान्मे भवाननुब्रवीतु" ॥ विश्वामित्र ऋषिश्छन्दो गायत्रं सविता तथा । देवतोपनये जप्ये गायत्र्या योग उच्यते । आवाहयामि गायत्रीं सर्वपापप्रणाशिनीम् ॥ न गायत्र्याः परं जप्यं न व्याहृतिसमं हुतम् । आगच्छ वरदे देवि जपे मे सन्निधौ भव ॥ गायन्तं त्रायसे यस्माद्गायत्री त्वं ततः स्मृता । [1]गायत्र्या शिखामाबद्ध्य । "ओजोसीति" गायत्रीमावाह्य देवानामार्षम् । ओजोसि सहोसि बलमसि भ्राजोसि देवानां धाम नामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूः । तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥

पच्छः । अर्धर्चशः । सर्वामन्ततः ॥ "इति ब्राह्मणस्य" (प्रथमोच्चारणे पादं पादं ब्रूयात्, द्वितीयोच्चारणे अर्धमर्धं, तृतीयोच्चारणे सर्वाम्, )

१ गुरुरेव गायत्रीमन्त्रेण कुशाग्रेण सहितां शिखां बध्नीयात् ।

(तां सवितुर्वरेण्यस्य चित्रामहं वृणे सुमतिं विश्वजन्याम् । याम-स्य कण्वो अदुहत्प्रपीणां सहस्रधारां पयसा महीं गाम् "इति राजन्यस्य" विश्वारूपाणि प्रतिमुञ्चते कविः [1]प्रसावीद्भद्रं द्विपदे चतुष्पदे । वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो वि-राजति ॥ "इति वैश्यस्य ॥)

[अत्र सावित्रीमन्त्रोपदेशः प्रणवरहित एवोपपद्यते ॥ अधीहि भोः सावि-त्रीत्रिजपपूर्वानित्यादि प्रार्थनायां प्रणवानिर्देशात् — ओंभूर्भुवःस्वरित्युपदेशकाले व्याहृतिभिरेव सह प्रणवस्य पूर्वं प्रयुक्तत्वाच्च । सावित्रीमन्त्रस्य च सर्वत्र प्रणवरहि-तस्यैव 'तदित्यृचोऽस्याः सावित्र्या इति तत्पदप्रतीकारम्भेणैव निर्दिष्टत्वात् । अन्यथा 'सव्याहृतिं सप्रणवां गायत्रीं,- इति 'ओंकारं पूर्वमुच्चार्य, इत्यादिना प्राणायामे जपे च पृथक् प्रणवो न निर्दिश्येत । व्रतशिक्षायां 'ओंभूर्भुवःस्वरित्युक्त्वा तत्सवितुरिति सावित्रीमनुब्रूयाः, इत्युक्तत्वाच्च । चतुर्विंशतिरेवाक्षराणि सावित्र्या इति चात्र ध्यातव्यम् । तां सवितुरित्यादिमन्त्रयोरपि न प्रणवः संयोज्यते । न चात्र विषये प्रणवयोजनायां काचिद्विशेषसूचना । ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वत्रेति तु वेदाध्ययनस्यैवारम्भान्तयोरिति ॥ ]

१ प्रासावीदित्यपि पाठः

“यश्च मेधाकामः स्यात्” ॥ “पालाशमेक[1]सरं दण्डं नवनीते-
नाभ्यज्य तस्य च्छायायां वा[2]चयति” ॥ सुश्रवः सुश्रवा असि
यथा त्वं सुश्रवा अस्येवं मा सुश्रवः सौश्रवसं कुरु । यथा त्वं
सुश्रवो देवानां वेदस्य निधिगोपोसि । एवमहं ब्राह्मणानां
ब्राह्मणो वेदस्य निधिगोपो [3]भूयासम् ॥ (इति पालाशं दण्डं
ब्राह्मणाय प्रयच्छति ॥ आश्वत्थं राजन्याय । नैयग्रोधं वैश्या-
य) ॥ स्मृतं च मे० इति वाचयति ॥ “स्मृतं निन्दा च विद्या
च श्रद्धा सत्यं तथैव च । मृतं श्रुतं व्रतं चैवमित्यष्टावुभयव्र-
तम्” । स्मृतं च मे अस्मृतं च मे तन्मे उभयव्रतम् ।१। निन्दा
च मे अनिन्दा च मे तन्मे उभयव्रतम् ।२। विद्या च मे अ-
विद्या च मे तन्मे उ० ।३। श्रद्धा च मे अश्रद्धा च मे० ।४।
सत्यं च मे असत्यं च० ।५। मृतं च मे अमृतं० ।६। श्रुतं च
मे अश्रुतं च मे० ।७। व्रतं च मे अव्रतं च मे तन्मे उभय-

१ अवान्तरशाखारहितम् २ स्वहस्तेन गृहीत्वा गुरुः, तस्य छायायां शिष्यं व्यव-स्थाप्य वाचयति ॥ ३ क्वचित् भूयांसमित्यपि पाठो विधिलिङि वैदिक्या प्रक्रिययो-पसर्गव्यत्ययेन शपोऽभावे च संभूयामिति स्यात् । संभवेय मिति लौकिकप्रयोगः,

व्रतम् ।८। यद्ब्राह्मणस्य ब्रह्मणि व्रतं, यदग्नेः सेन्द्रस्य सप्रजापतिकस्य सर्षिकस्य सपितृकस्य समनुष्यस्य समनुष्यराजन्यस्य सगन्धर्वाप्सरोजनस्कस्य ससर्पेतरजनस्कस्य सौषधिवनस्पतिकस्य सहग्राम्यैश्च पशुभिरारण्यैश्च साकाशस्य सप्रकाशस्य सानूकाशस्य सातीकाशस्य सह यन्मे आत्मन आत्मनि व्रतं तन्मे सर्वव्रतमिदमहमग्नौ समिधमभ्यादधाम्यग्ने सर्वव्रतो भवामि ॥ अधीते हैतेषां वेदानामेकं द्वौ त्रीन्सर्वान्वायमेवं विद्वानुपनयते इतिश्रुतिः ॥ (प्रतिगृह्योप्सितं दण्डमुपस्थाय च भास्करम् । प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि ॥ भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः । भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥ ऋतुनक्षत्रयागात्प्राग्भैक्षस्याचरणं विदुः । मातरं वा स्वसारं वा मातुर्वा भ-

१ आदौ वामकरे पात्रं दण्डमादाय दक्षिणे । ततः प्रसन्नहृदयः कुर्याद्भिक्षाटनं शुभम भिक्षाकाले यदा रिक्तं पात्रं सन्दर्शयेद्बुधः । ब्रह्महत्यासमं पापं प्राप्नोत्यत्र न संशयः॥ स्वस्तीति ब्राह्मणो ब्रूयादायुष्मानिति भूमिपः । वर्धतामिति वैश्यश्च शूद्रस्तु स्वागतं वदेत् ॥ भवति भिक्षां देहीति ब्राह्मणविषये, भिक्षां भवति देहीति राजन्ये, भिक्षां देहि भवतीति वैश्यविषयः ।

गिनीं निजाम् ॥ भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत् ॥ सुवर्णं रजतं वापि सा पात्रे तस्य निक्षिपेत् । समाहृत्य तु तद्भैक्षं यावदर्थममायया । निवेद्य गुरवेऽश्नीयादाचम्य प्रयतः शुचिः ॥ ब्राह्मणस्य धनं भिक्षा क्षत्रियस्य धनुर्धनम् । वैश्यस्य कृषिवाणिज्यं शूद्रस्य सेवनं स्मृतम् ॥ ) भवति भिक्षां देहि स्वस्ति ॥ "इति स्त्रीविषये" । भो भिक्षां देहि स्वस्ति ॥
"इति पुंविषये" ॥ तत आदौ पितृयज्ञोपवीतं पश्चात्तद्भिक्षा ॥ ततः सर्वेषां बान्धवानां च भिक्षा ॥ ततः ऋतुतिथ्यादियाग तन्त्र समाप्तिः ॥ ततो [1]ब्राह्मणपूजनम् । ओंभूर्भुवः स्वः० ३ ।

१ मातरिश्वना कश्चित्पृष्टः—दैव्यस्य होतुरग्ने र्यद्विज्ञानं तत्किमयं ब्राह्मणो मनुष्यहोता यज्ञमुपायन् बिभर्ति, स तं प्रत्याह—यावन्मात्रमुषसो न प्रतीकं सुपर्ण्यो वसते मातरिश्वः । तावद्दधात्युपयज्ञमायन् ब्राह्मणो होतरवरो निषीदन् ॥ ऋ० सं० ८,४, १३,४निरुक्तस्याध्याय७ खण्ड ३१ ॥ अतो दैव्याद्धोतुरग्नेरवरो–यविष्ठो होतृत्वे वृतो ब्राह्मणः । दुर्गाचार्योपि "दैव्यस्याग्नेःपरस्य भूयोविदोऽवरोऽन्योऽल्यविदित्यनुकरोत्यल्पम् ॥ इति मानुषो ह्यग्न्यनुग्रहादेवायमल्प विज्ञानोपि होता हौत्रं करोति" इति व्याख्यातवान् इति बहुत्र निरूपितमस्ति ॥ अतोऽध्वर्यु [ब्राह्मण] पूजने "गन्धादौ अग्नये यविष्ठायेति" न समीचीनम् ॥ किन्तु "अग्नेर्यविष्ठाय" इत्येव ॥ (षष्ठ्यन्तमेवात्र सर्वत्राग्निपदं प्रयोज्यम् इति तात्पर्यम्)

अद्य तावत्० अग्नेर्यविष्ठस्य सानुचरस्यादित्यस्येत्यादि मेधायाः सरस्वत्याः छन्दसामुपाग्यनव्रतदेवतानां आत्मनो० मौञ्जीबन्धननिमित्तमर्चामहं करिष्ये ओंकुरुष्व । दक्षिणान्तं । दक्षिणां दत्त्वा ब्राह्मणपूजनाच्छिद्रं पूर्ववत्कर्तव्यम् ॥ कर्त्रे वरं ददात्यहः शेषं स्थापयेत । व्याख्यातं ब्रह्मचर्यम ॥ पूर्णां दत्त्वा । विमुच्य नयामि० ॥ पुनरग्निं परिसमुह्य पर्युक्ष्य ६ ॥

अथ व्रतशिक्षा ॥ ब्रह्मचारी बाढमिति प्रत्याह । उपनयनप्रभृति व्रतचारी स्याः । मार्गवासाः स्याः, संहृतकेशः स्याः, भैक्षाचार्यवृत्तिः स्याः, सशल्कदण्डः स्याः, सप्तमुञ्जां मेखलां धारयेः, न मधुमांसे अश्नीयाः, क्षारलवणवर्जी स्याः, आचार्यस्याप्रतिकूलः स्याः, सर्वकार्यास्वतन्त्रः स्याः, पूर्वोत्थायी स्याः, जघन्यसंवेशी स्याः, यदेनमुपेयात्तदस्मै दद्याः, बहूनां येन संयुक्तस्तदस्मै दद्याः, नास्य शय्यामाविशेः, न रथमारुहेः, न संवस्त्रयेथाः, सर्वाणि सांस्पर्शकानि स्त्रीभिः सह वर्जयेः, न मुषितां प्रेक्षेः,

न विहारार्थं जल्पेः, न रुच्यर्थं किञ्चन धारयेथाः, न स्नायाः, उदकं वाभ्युपेयाः, यदि स्नाया दण्ड इवाप्सु परिप्लवेथाः, मुण्डो भव, जटिलो भव, एकशिखी वा भव, सायं प्रातः सन्ध्यामुपासीथाः, तिष्ठेः पूर्वामासीथा उत्तराम्, ओंभूर्भुवःस्वरित्युक्त्वा तत्सवितुरिति सावित्रीमनुब्रूयाः, प्रागस्तमयान्निष्क्रम्य समिध आहरेः ; हरिणीर्ब्रह्मवर्चसकाम इति श्रुतिः। सायं प्रातः सन्ध्यानिःसरणं कर्तव्यम्, भैक्षचरणं कर्तव्यम्, अग्नीन्धनं कर्तव्यम्, सायमेवाग्नीन्धनमित्येके ॥ भैक्षस्याचरणे दोषः पावकस्यासमिन्धने । सप्तरात्रमकृत्वैतदवकीर्णिव्रतं चरेत् ॥ सप्तागारं चरेद्भैक्षं स्वकर्म परिकीर्तयन् । तेभ्यो लभ्येन भैक्षेण वर्तयेदेककालिकम् । उपस्पृशंस्त्रिषवणमब्देन स विशुद्ध्यति ॥ कामावकीर्णोस्म्यवकीर्णोस्मि कामकामाय स्वाहा । १ । कामाभिद्रुग्धोस्म्यभिद्रुग्धोस्मि कामकामाय स्वाहा । २ । "इत्यवकीर्णिव्रतम्" इति व्रतशिक्षा ॥ [अथ शौचशिक्षा] ॥ उपनीय गुरुः शिष्यं शि-

त्त्येच्छौचमादितः । आचारमग्निकार्यं च सन्ध्योपासनमेव च । प्रतिश्रयाद्दक्षिणपश्चिमेन क्षिप्रं गत्वा क्षेपमात्रं शरस्य । कृत्वा पुरीषं च शिरोऽवगुण्ठ्य न तु स्पृशेज्जातु शिरः करेण ॥ शुष्कैस्तृणैर्वा काष्ठैर्वा पर्णैः पत्रदलेन वा । सुसंवृते प्रदेशे वा ह्यन्तर्धाय वसुन्धराम् ॥ मूत्रोच्चारसमुत्सर्गं दिवा कुर्यादुदङ्मुखः । दक्षिणाभिमुखो रात्रौ सन्ध्ययोश्च यथा दिवा । एका लिङ्गे गुदे तिस्रस्तथा वामकरे दश । उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता ॥ एकां लिङ्गे मृदं दद्याद्वामहस्ते तु मृत्त्रयम् । उभयोर्हस्तयोर्द्वे तु मूत्रशौचं प्रचक्षते ॥ विप्रे गौरमृदः शौचे क्षत्रे रक्ताः प्रकीर्तिताः । हरिद्रवर्णा वैश्ये तु कृष्णाः स्त्रीशूद्रयोः स्मृताः ॥ नाहरेन्मृत्तिकां वप्रान्न कूलात्सैकतात्तथा । नाखुकृष्टान्न वल्मीकात्पांसुलान्नच कर्दमात् ॥ न मार्गान्नोषराच्चैव शौचशिष्टां परस्य नो । एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ॥ त्रिगुणं तु वनस्थानां यतीनां तु चतुर्गुणम् ॥ दिवाशौचस्य रात्र्यर्धं पथि

पादौ विधीयते । आर्तः कुर्याद्यथाशक्ति स्वस्थः कुर्याद्यथोदितम् होमे भोजनकाले च सन्ध्ययोरुभयोरपि । आचान्तः पुनराचामेदन्यत्र तु सकृत्सकृत् ॥ इति शौच शिक्षा ॥

अथ सन्ध्योपासनविधिः ।

ऊँश्रीमहागायत्र्यै नमः सावित्र्यै नमः

सरस्वत्यै नमः

ऊँप्रणवस्य ऋषिर्ब्रह्मा-इत्यादि ॥ ततः प्राणायामः ॥ अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्तदवलुम्पतु यत्किञ्चिद् दुरितं मयीदमहममृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा ॥ सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु यत्किञ्चिद् दुरितं मयीदमहममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा ॥ आपः पुनन्तु

पृथिवीं पृथिवी पूता पुनातु मां पुनातु ब्रह्मणस्पतिर्ब्रह्म पूतं पुनातु मां यदुच्छिष्टमभोज्यं वा यद्वा दुश्चरितं मम सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहं जुहोमि स्वाहा ॥ ओं आपो हि ष्ठा मयोभुवः । (हृदय पर) ओं ता न ऊर्जे दधातन । (पादों पर) ओं महे रणाय चक्षसे । (ललाट पर) ओं यो वः शिवतमो रसः । (ललाट पर) ओं तस्य भाजयतेह नः । (पादों पर) ओं उशतीरिव मातरः । (हृदय पर) ओं तस्मा अरं गमाम वो । (ललाट पर) ओं यस्य क्षयाय जिन्वथ । (हृदय पर) ओं आपो जनयथा च नः । (पादों पर) हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । या अग्निं गर्भं दधिरे विरूपास्ता न आपः शंस्योना भवन्तु ॥ यासां देवा दिवि कृण्वन्ति भक्ष्यं या अन्तरिक्षे बहुधा भवन्ति । या अग्निं गर्भं० ॥ यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् । या अग्निं गर्भं० ॥ शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे मधुश्च्युतः शुचयो याः पावकास्ता न आपः

शंस्योना भवन्तु ॥ शन्नो देवीरभीष्टय आपो भवन्तु पीतये शंय्यो-रभिस्रवन्तु नः ॥ शन्न आपो धन्वन्याः शन्नः सन्त्वनूप्याः । शन्नः-समुद्रिया आपः शमु नः सन्तु कूप्याः ॥ आपो अस्मान्मातरः शुन्धयन्तु घृतेन मा घृतप्वः पुनन्तु । विश्वं हि रिप्रं प्रवहन्ति देवी-रुदिदाभ्यः शुचिरापूतएमि ॥ इदमापः प्रवहत यत्किंचिद् दुरितं मयि । यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् । मुञ्चन्तु मा शपथ्या दथो वारुण्याहुत । अथो यमस्य पड्वीशात्सर्वस्माद्देवकिल्विषात् ॥ यज्जाग्रद्यत्सुप्तः पापमभिजगाम सर्वस्मान्मा तस्मादेनसः प्रमुञ्चतु ॥ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत्प्राण आयूंषि तारिषत् ॥ द्रुपदादिवोन्मुमुचानः स्विन्नःस्ना-त्वीर्मलादिव । पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ॥ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ततो रात्रिरजायत ततः समुद्रो अर्णवः समुद्रादर्णवादधि संवत्सरो अजायत अहोरात्राणि विद-धद्विश्वस्य मिषतो वशी सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्

दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥ ओं भूः ओं भुवः ओं स्वः ओं महः ओं जनः ओं तपः ओं सत्यम् ओं अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः । त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोमृतं ब्रह्म भूर्भुवः स्वरोम् ॥ (प्राणायामः) त्रीञ्जलाञ्जलीन्क्षिपेत् ॥ ओं भूर्भुवः स्वस्तत्सवितुः० ॥ उपस्थानम् । उद्वयन्तमस० । उदु त्यञ्जात० । चित्रन्देवाना० । तच्चक्षुर्देवहितं० । हंसः शुचिषद्० । बिभ्राड्बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् । वातजूतयो अभिरक्षातित्मना प्रजाः पिपर्त्ति बहुधा विराजति ॥ पुरुषसूक्तम् १६ मन्त्राः ॥ ओं यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति । दूरंगमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु ।१। येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः । यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिव० ।२। यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु । यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिव० । येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम् । येन यज्ञस्ता-

यते सप्त होता तन्मे मनः शिव०।४। यस्मिन्नृचः साम यजूंषि यस्मि-
न्प्रतिष्ठिता रथनाभाविवाराः। यस्मिंश्चित्तं सर्वमोतं प्रजानां तन्मे
मनः शिव० ।५। सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीषुभिर्वा-
जिन इव। हृत्प्रतिष्ठं यदजरं जविष्ठं तन्मे मनः शिव०।६। अथ य एष
एतस्मिन्मण्डले पुरुषो यश्चैष हिरण्मयः पुरुषः। अथ य एष एत-
स्मिन्मण्डले पुरुषोऽयमेव सोऽयं दक्षिणेऽक्षन्पुरुषः ॥ शुक्रियं रुद्रस्य
यउदगात् पुरस्तात्० ॥ अनाभौ इत्यादि सर्वम् ॥ तत् समाय नमः
स सम्पुटाय नमः। वि विततायं नमः। तु विस्तीर्णाय नमः। व द्वि-
मुखाय नमः। रे त्रिमुखाय नमः। ण्य चतुर्मुखाय०। अं पञ्चमुखाय०।
भ षण्मुखाय०। र्गो अधोमुखाय०। दे व्यापकाञ्जलये०। व शक-
टाय०। स्य यमपाशाय०। धी ग्रन्थिकायै०। म संमुखोन्मुखाय०। हि
विलम्बाय०। धि मुष्टिकायै०। यो मीनाय०। यो कूर्माय०। नः
वराहाय०। प्र सिंहाक्रान्ताय०। चो महाक्रान्ताय०। द मुद्गराय०।
यात् पल्लवाय नमः ॥ ततः प्राणायामः ॥ तत्सवितुरिति मन्त्रस्य,

विश्वामित्र ऋषिः गायत्रं छन्दः, सविता देवता, आत्मनो० जपे विनियोगः ॥ ध्यानं, मुक्ताविद्रुम० । ओं भूर्भुवःस्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ओं ॥ इति जपः । तदन्ते । प्राणायामः । देवा गातुविदो इति तर्पणम् । महेशवचनोत्पन्नै० नमः प्राच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च वो नमः । नमोऽवान्तरायै० । नमो दक्षिणायै० । नमोऽवा० । नमः प्रतीच्यै० । नमोऽवा० । नम उदीच्यै० । नमोऽवा० । नम ऊर्ध्वायै० । नमोऽधरायै ॥ नमो ब्रह्मणे नमोस्त्वग्नये इत्यादि० । ओं नमो देवेभ्य इत्यादि ॥ नमो धर्म निधानायेत्यादि ॥

अथाग्निं परिषिञ्चामि ३ । "नात्र परिस्तरणं" विभूरसीत्यनुवाकेनाग्निमुपस्थाय । (धिष्ण्यानामङ्गिरसामग्निगणानां चार्षम् ।) विभूरसि प्रवाहणो वह्निरसि हव्यवाहनः श्वात्रोसि प्रचेतास्तुथोसि विश्ववेदा उशिगसि कविरङ्घारिरसि बम्भारिरवस्युरसि दुवस्वाञ्शुन्ध्युरसि मार्जालीयः सम्राळसि कृशानुः परिषद्योस्या

स्तव्यो नभोसि प्रतक्वा संमृष्टोसि हव्यसूदन ऋतधामासि स्वर्ज्योतिः समुद्रोसि विश्वव्यचा अजोस्येकपादहिरसि बुध्न्यः कव्योसि कव्यवाहनो रौद्रेणानीकेन पाहि माग्ने पिप्रीहि माग्ने नमस्ते अस्तु मा मा हिंसीः । (तत उपविश्य) । एधोसीति समिध आदधाति । विहव्यस्याङ्गिरसस्यार्षम् ॥ एधोस्येधिषीमहि । "इति प्रथमां"। समिदसि समिधिषीमहि "इति द्वितीयां" ॥ इदमहमग्नौ समिधमभ्यादधाम्यग्ने सर्वव्रतो भवामि "इति तृतीयां" ॥ इदमहमग्नौ समिधमाहार्षं बृहते जातवेदसि स मे श्रद्धां च मेधां च दीर्घं चायुर्जातवेदाः प्रयच्छतु "इति चतुर्थीम्" तेजोसीत्यग्निमनुमन्त्रयते ॥ तेजोसि तेजो मयि धेहीत्यात्मानं हृदयदेशे । शेषेणोपतिष्ठते ॥ विहव्यस्याङ्गिरसस्य । अपो अद्यानुचारिषं रसेन समगन्महि । पयस्वानग्न आगमन्तम्मा संसृज वर्चसा । सं माग्ने वर्चसा सृज प्रजया च धनेन च । विद्युर्मे अस्य देवा[१] इन्द्रो विद्यात्सहर्षिभिः इत्युपस्थानम् ॥ तत उप-

१ य इन्द्रो ।

विश्य ॥ ततः प्रातः प्रागुदयाद्द्वादश चतुर्विंशतिं षट्त्रिंशतमष्टचत्वारिंशतं वा वर्षाणि यो ब्रह्मचर्यं चरति मलजुरबलः कृशः सर्वं स विन्दते स्नात्वा, यत्किञ्चिन्मनसेच्छति, एतेनैव धर्मेण साध्वधीते । अग्निं विमुच्य ३ । नयामि । "इत्यग्नीन्धनम्" ॥ इत्युपायनम् ॥ १० ॥

अथ त्रैविद्यकम् ॥ अग्निं परिसमुह्य पर्युक्ष्य परिषिच्य ॥ आदौ पञ्च० । उत्तरतः सं० ॥ नास्ति निर्वपणम् । पृश्न्याः पयोसि० । आज्यदर्शनम् । आत्मनो० छन्दोभ्यः । त्रैविद्यकाय इदमाज्यमर्पयामि नमः ॥ आज्यभागान्तं हुत्वा । [त्रैविद्यकम् आचार्यस्य विधिर्यो वेदमधीते पुरस्ताच्चोपरिष्टाच्चांहोमुग्भिः समिधोभ्यादध्यादुक्तं व्रतोपायन-विमोचनम् ॥ वसनं मेखलां चर्म दण्डं समिधमेवच । व्रतालम्भं प्रधानं च कुर्यात्सर्वव्रतेष्वपि ॥ यद्यस्य विहितं चर्म यत्सूत्रं या च मेखला । यो दण्डो यच्च वसन तत्तत्सर्वव्रतेष्वपि] ॥ रेवतीस्त्वा० । इयं दुरुक्तात्० । मित्रस्य चक्षुः० ।

सुश्रवः० । "इति वसनमेखलाजिनदण्डमन्त्रानावर्तयेत्" ॥ यद्देवा देवहेळनमिति अंहोमुग्भिस्तिष्ठन्तं समिदाधानं कारयित्वा अग्ने-व्रतपत इत्युपस्थापयति निचाङ्कुणस्य ॥ यद्देवा देवहेळनं देवासश्चकृमा वयम् । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः । १ यदि दिवा यदि नक्तमेनांसि चकृमा वयम् । वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ।२। यदि जाग्रद्यदि स्वप्न एनांसि चकृमा वयम् । सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ।३। अथ व्रतालम्भ यजूंषि विहव्यस्याङ्गिरसस्य । तथाच तत्रत्यं सूत्रम्—पाणी प्रक्षाल्य दक्षिणतोऽग्नेस्तिष्ठन् ब्रूयात् इति ॥ उपस्थानम् । अग्ने व्रतपते व्रतमालभे तत्ते प्रब्रवीमि तच्छकेयं तेनर्ध्यासम् ।१। वायो व्रतपते व्रतमालभे तत्ते प्रब्रवीमि तच्छकेयं तेनर्ध्यासम् ।२। सूर्यव्रतपते व्रतमालभे तत्ते प्रब्रवीमि तच्छकेयं तेनर्ध्यासम् ।३। इत्यालभ्य ॥ चतुर्गृहीतेनाज्यप्रधानम् । तेजोसि० ॥ ये के च ज्मा० । छन्दोभ्यः स्वाहा । त्रैविद्यकाय स्वाहा ॥ "पश्चादग्नेर्दर्भेषु आसीनं कृतपादोपसंग्र-

हणं गुरुः प्रणवं व्याहृतीश्चाध्यापयति । अधीहि भोः सावित्री-
त्रिजपपूर्वांस्त्रैविद्यकव्रतमन्त्रान्मे भवाननुब्रवीतु" ॥ ओंभूर्भुवःस्व-
स्त० ३ ॥ इषे त्वोर्जेत्वेति त्रीननुवाकान् । इषे त्वोर्जे त्वा वायवः
स्थोपायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे आप्या-
यध्वमघ्न्या देवभागं प्रजावतीरनमीवा अयक्ष्माः मा वस्तेन
ईशत माघशंसः परि वो रुद्रस्य हेतिर्वृणक्तु ध्रुवा अस्मिन्गोपतौ
स्यात बह्वीर्यजमानस्य पशून्पाहि यजमानस्य पशुपा असि ।१।
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे
गोषदसि प्रत्युष्टं रक्षः प्रत्युष्टारातिः प्रेयमगाद्धिषणा बर्हिरच्छ
मनुना कृता स्वधया वितष्टा उर्वन्तरिक्षं वीहीन्द्रस्य परिषूतमसि
माधो मोपरि परुस्त ऋध्या स मा च्छेत्ता ते मारिषत् देवबर्हिः
शतवल्शं विरोह सहस्रवल्शा वि वयं रुहेम आदित्या रास्नासी-
न्द्राण्याः सन्नहनं पूषा ते ग्रन्थिं ग्रश्नातु स ते मा स्थादिन्द्रस्य त्वा
बाहुभ्यामुद्यच्छे बृहस्पते स्त्वा मूर्ध्ना हरामि देवङ्गममसि तदाहरन्ति

कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे ।२। वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमयक्ष्मा वः प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीः । मधुमद्घृतवत्पिन्वमाना जीवा जीवन्तीरुप वः सदेम मातरिश्वनो घर्मोसि द्यौरसि पृथिव्यसि विश्वधायाः परेण धाम्नाहुतासि माह्वाः सा विश्वायुः सा विश्वव्यचाः सा विश्वधायाः हुतस्तोको हुतो द्रप्सोग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्यां सम्पृच्यध्वमृतावरी ऊर्मिणा मधुमत्तमा मन्द्रा धनस्य सातयः इन्द्रस्य त्वा भागं सोमेनातनच्म्यदस्तमसि विष्णवे विष्णो हव्यं रक्षस्वापो जागृत ।३। यजुर्वेदो भवान् ॥ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्, होतारं रत्नधातमम् ॥ अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत, स देवानिह वक्ष्यति ॥ अग्निना रयिमश्नवत्पोषमेव दिवे दिवे, यशसं वीरवत्तमम् ॥ अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि, स इद्देवेषु गच्छति ॥ अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः, देवो देवेभिरागमत् ॥ यदङ्ग दाशुषे

त्वमग्ने भद्रं करिष्यसि, तवेत्तत्सत्यमङ्गिरः ॥ उप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयम्, नमो भरन्त एमसि ॥ राजन्तमध्वराणां गोपामृतस्य दीदिविम्, वर्धमानं स्वे दमे ॥ स नः पितेव सूनवेग्ने सूपायनो भव, सचस्वा नः स्वस्तये ॥ " इत्यृक्संहिताद्यसूक्तम् ॥" "ऋग्वेदो भवान्" अग्न आयाहि वीतये० इति सामर्चं च वाचयित्वा ॥ अग्न आयाहि वीतये गृणानो हव्यदातये निहोता सत्सि बर्हिषि ॥ "सामवेदो भवान्" । नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधिभ्यः नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते कृणोमीत्येतासामेव देवतानां सार्ष्टितां सायुज्यं सामीप्यं सलोकतामाप्नोति य एवं विद्वान्स्वाध्यायमधीते ॥ ३ ॥ इति परिधानीयांस्त्रिरन्वाह ॥ तत ऋतुतिथ्यादितंत्रसमाप्तिः विमुच्य० ३ ॥ नयामि ॥ इति त्रैविद्यकमन्त्राः ॥ ११ ॥

अथोपाकर्म ॥ अग्निं परिसमुह्य पर्युक्ष्य परिषिच्य ॥

चातुष्कोष्ठैः स्तरैःपरिस्तीर्य । (उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च । ऋषीन्दर्भमयान्कृत्वा पूजयेत्तर्पयेत्ततः ॥ पूर्वापरावुदग्यौ प्रागग्रौ दक्षिणोत्तरौ । चातुष्कोष्ठाः स्तरा ज्ञेयाः पित्र्ये दक्षिणपश्चिमौ ॥) पृश्न्याः पयोसि० । आज्यदर्शनम् ॥ आत्मनोवा० उपाकरणदेवताभ्य इदमाज्यमर्पयामि नमः ॥ अभ्युक्ष्य पवित्रमग्नावभ्यादधाति स्रुवं प्रतिताप्य ( यैःकैश्चिद्दर्भाग्रैः (उपयामरहितं) स्रुवं संमृज्य होमः । ) अप्वा नामासीऽत्यष्टौ स्रुवेणाज्याहुतीर्जुहुयात् । अप्वा नामासि तस्यास्ते जोष्ट्रीयं गमेयमहमिद्धमेधः परि मेधामृतस्य जगृभ[1] अहं सूर्य इवाजनि स्वाहा ।१। रन्तिर्नामासि तस्यास्ते० ।२। युक्तिर्नामासि तस्या० ।३। योगो नामासि तस्यास्ते जो० ।४। युजे स्वाहा ।५। उद्युजे स्वाहा ।६। युक्त्यै स्वाहा ।७। योगाय स्वाहा ।८। अन्तेवासिनां योगमिच्छन्[2] ॥ दधि क्राव्णो० " इति त्रिर्दधि भक्षयित्वा (आत्मना दधि

१ जगृह्णुः इत्यपि पाठः । २ उपवेदग्रहणार्थं प्रज्ञातिशयसम्बन्धम् ॥

प्राश्यान्तेवासिनं च प्राशयित्वा)" ॥ पश्चादग्नेर्दर्भेष्वासीनं कृत-पादोपसंग्रहणं गुरुः प्रणवं व्याहृतीश्चाध्यापयति ॥ अधीहि भोः सावित्रीत्रिजपपूर्वानुपाकरणव्रतमन्त्रान्मे भवाननुब्रवीतु" ॥ ओंभू-र्भुवःस्वस्तत्स० ॥३॥ इषे त्वोर्जे त्वा "इत्यनुवाकत्रयं हव्यं रक्ष-स्वापो जागृतेत्यन्तं पठित्वा" ॥ कस्त्वा युनक्तीति घोराणामार्षम् ॥ कस्त्वा युनक्ति स त्वा युनक्तु विष्णुस्त्वा युनक्त्वऽस्य यज्ञस्य-र्ध्यै मह्यं सन्नत्यै अध्ययनाय अमुष्मै कामायाऽऽयुषे त्वा प्राणाय त्वा व्यानाय त्वाऽपानाय त्वा व्युष्ट्यै त्वा रय्यै त्वा राधसे त्वा पोषाय त्वा घोषाय त्वाऽऽराद्घोषाय त्वा प्रच्युत्यै त्वा ॥ नमो ब्रह्मणे० ।३। प्रागग्रानुदगग्रांश्च विंशतिसंख्याकानृषीन् संस्थाप-येत् ॥ तत ऋषिपूजनम् ॥ संव्वः सृजामि० । अश्विनोः प्राण० । गायत्र्यै नमः । ओंभूर्भुवः स्वः० ३ अद्यतावत् । अग्नेः वायोः सूर्यस्य ब्रह्मणः इन्द्रस्य प्रजापतेः भवस्य शर्वस्य ईशानस्य ईश्व-रस्य विष्णोः बृहस्पतेः यजुर्वेदस्य छन्दसां ऋषीणां वेदानां व्राह्म-

णानां सोमानां सोमपानां आचार्याणां विंशतिऋषीणां आत्मनो० सुतस्य मौंजीबन्धननिमित्तमर्चामहं करिष्ये ओंकुरुष्व ॥ एवमेव षष्ट्यासनम् ॥ अग्नये वायवे सूर्याय ब्रह्मणे इन्द्राय प्रजापतये भवाय शर्वाय ईशानाय ईश्वराय विष्णवे बृहस्पतये यजुर्वेदाय छन्दोभ्यः ऋषिभ्यः वेदेभ्यः ब्राह्मणेभ्यः सोमेभ्यः सोमपेभ्यः आचार्येभ्यः विंशतिऋषिभ्यो युष्मान् पूजयामि ओंपूजय। अग्निं वायुं सूर्यं ब्रह्माणं इन्द्रं प्रजापतिं भवं शर्वं ईशानं ईश्वरं विष्णुं बृहस्पतिं यजुर्वेदं छन्दांसि ऋषीन् वेदान् ब्राह्मणान् सोमान् सोमपान् आचार्यान् विंशतिऋषीन् आवाहयिष्यामि ओमावाहय ॥ यवान्विकीर्य। शन्नो देवी० । लाजाश्च० । अग्नये वायवे [२०] विंशतिऋषिभ्यः पाद्यं नमः । पुनः शन्नो देवी० । आपः क्षीरं० । अग्ने वायो सूर्य ब्रह्मन् इन्द्र प्रजापते भव शर्व ईशान ईश्वर विष्णो बृहस्पते यजुर्वेद छन्दांसि ऋषयः वेदाः ब्राह्मणाः सोमाः सोमपाः आचार्याः विंशतिऋषयः इदं वोऽर्घ्यं नमः । एवं गन्धपु-

ष्पादि दक्षिणांतं ॥ नैवेद्यम् ॥ विमुच्य० ३ । नयामि० ॥ (अग्नेः समीपे दक्षिणतः स्थाप्याः) इत्युपाकरणम् ॥ १२ ॥

अथ चातुर्होतृकम् ॥ अग्निं परिसमुह्य पर्युक्ष्य परिषिच्य । आदौ पञ्च० ॥ उत्तरतः सं० । सावित्राणि० ॥ चतुर्होतृभ्यः छन्दोभ्यः चातुर्होतृकाय जुष्टं निर्वपामि । विष्णोर्मनसेति० । एवं प्रोक्षामि ॥ आज्यदर्शनम् । आज्यभागान्ते ॥ [ अथातः चातुर्होतृकं ब्रह्मचारिकल्पेन व्रतमुपैति । संवत्सरमष्टौ मासां-श्चतुरो मासान्वा शुद्धपक्षस्य पुण्याहे पर्वणि वा यथोक्तमुपसमा-धाय जयप्रभृतिभिर्हुत्वा ॥ " ब्रह्मचारिणो वसनादिमन्त्रानावर्त-येत् " ] ॥ रेवतीस्त्वा० । इयं दुरुक्तात्० । मित्रस्य चक्षुः० । सुश्रवः सुश्रवाः० ॥ ( पूर्वेणाग्निं गोमयपिण्डे षट्पञ्चाशता दर्भाङ्कुरैर्ब्रह्मप्रकृतिं दर्भस्तम्भं संस्थाप्यार्चयेत् ) ॥ संवः सृजामि० । अश्विनोः० । ओंगायत्र्यै नमः ओंभूर्भुवःस्वः० । ३ । चतुर्मुखाय विद्महे कमण्ड-लुधराय धीमहि, तन्नो ब्रह्मा प्र० ३ अद्य तावत् । पृथिव्याः अग्नेः

ऋग्वेदस्य ब्रह्मणः छन्दसां । अन्तरिक्षस्य वायोः यजुर्वेदस्य ब्रह्मणः छन्दसां दिवः सूर्यस्य सामवेदस्य ब्रह्मणः छन्दसां दिशां चन्द्रमसः अथर्ववेदस्य ब्रह्मणः छन्दसां चतुर्मुखस्य ब्रह्मणः आत्मनो॰ सुतस्य मौञ्जीबन्धननिमित्तं अर्चामहं करिष्ये ओंकुरुष्व ॥ एवं षष्ठ्यासनम् ॥ पृथिव्यै अग्नये ऋग्वेदाय ब्रह्मणे छन्दोभ्यः । अन्तरिक्षाय वायवे यजुर्वेदाय ब्रह्मणे छन्दोभ्यः । दिवे सूर्याय सामवेदाय ब्रह्मणे छन्दोभ्यः । दिग्भ्यः चन्द्रमसे अथर्ववेदाय ब्रह्मणे छन्दोभ्यः चतुर्मुखाय ब्रह्मणे त्वां पूजयामि ओंपूजय ॥ पृथिवीं अग्निं ऋग्वेदं ब्रह्माणं छन्दांसि । अन्तरिक्षं वायुं यजुर्वेदं ब्रह्माणं छन्दांसि । दिवं सूर्यं सामवेदं ब्रह्माणं छन्दांसि । दिशः चन्द्रमसं अथर्ववेदं ब्रह्माणं छन्दांसि चतुर्मुखं ब्रह्माणं आवाहयिष्यामि ओमावाहय ॥ आवाहयामि कमलासन संस्थितं तं मुद्रां श्रुतीः परिवहन्तमथाक्षसूत्रम् । दण्डं कमण्डलुमथो सततं वहन्तं ब्रह्माणमीश्वरपरं मखरक्षणार्थम् ॥ आवाहयाम्यहं देवं ब्रह्माणं

कमलोद्भवम् । कमण्डल्वक्षसूत्राभ्यामन्वितं हंसवाहनम् ॥ रक्त-
वर्णो० । ब्रह्मा देवानां० ॥ यवान्विकीर्य ॥ शन्नो देवी० । लाजाश्च०।
पृथिव्यै० इत्यादि चतुर्मुखाय ब्रह्मणे पाद्यं नमः । (पुनः) शन्नो
देवी० । आपः क्षीरं० । पृथिवि अग्ने ऋग्वेद ब्रह्मन् छन्दांसि ।
अन्तरिक्ष वायो यजुर्वेद ब्रह्मन् छन्दांसि । द्यौः सूर्य सामवेद
ब्रह्मन् छन्दांसि । दिशः चन्द्रमः अथर्ववेद ब्रह्मन् छन्दांसि चतु-
र्मुख ब्रह्मन् इदं वोऽर्घ्यं नमः । एवं गन्धपुष्पादि नैवेद्यान्तम् ॥
[ हिरण्यवर्णा इति चतसृभिः समिधोऽभ्यादध्यात ] ॥ हिरण्य-
वर्णाः शुचयः० । १ । यासां देवा० । २ । यासां राजा० । ३ ।
शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे मधु-
श्च्युतः शुचयो याः पावकास्ता न आपः शंस्योना भवन्तु ॥ ४ ॥
" पाणी प्रक्षाल्य " ॥ अग्ने व्रतपते इत्युपस्थापयाति ॥ अग्ने व्रतपते
व्रतमालभे तत्ते प्रब्रवीमि तच्छकेयं तेनर्ध्यासम् । १ । वायो व्रत-
पते० । २ । सूर्य व्रतपते० । ३ । ब्राह्मणा व्रतपतयो व्रतमालभे

तद्वः प्रब्रवीमि० ।४। अथ व्रतहोमान् (वक्ष्यामः)॥ (प्रधानानि स्थालीपाकस्य, चतुर्गृहीतैश्चतुर्होतृभिराज्येन तेजस्कामो, यावकेन पशुकामोऽन्नाद्येन वीर्यकामः पयसि स्थालीपाकं श्रपयित्वा, ब्रह्मवर्चसकामो मनसैकैकं हुतमनुमन्त्रयते ) चित्तिः स्रुगिति सप्त प्रधानाहुतीर्जुहुयात् । चतुर्होतृणामार्षम् । ( तेजोसि० ) चित्तिः स्रुक्चित्तमाज्यं वाग्वेदिराधीतं बर्हिः केतो अग्निर्विज्ञातमग्निद्वाचस्पतिर्होता मन उपवक्ता प्राणो हविः सामाध्वर्युरिन्द्रं गच्छ, स्वाहा । १ । मनसा, चित्तिः स्रुगित्यनुमन्त्रयते ॥ पृथिवी होता द्यौरध्वर्युस्त्वष्टाग्निन् मित्र उपवक्ता वाचस्पते वाचो वीर्येण सम्भृततमेनायक्ष्यसे यज्ञपतये वार्यमास्वस्करो वाचस्पतिः सोमं पिबतु जजनदिन्द्रमिन्द्रियाय स्वाहा सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाः श्रातास्त इन्द्र सोमा वातापे हवनश्रुतः, स्वाहा २। मनसा, "पृथिवी होता" ॥ अग्निर्होताश्विनाध्वर्यू रुद्रोग्निद्बृहस्पतिरुपवक्ता वाचस्पते हृद्विधेनामन्वाचस्पतिः सोममपादा-

स्मासु नृम्णं धाः स्वाहा सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाः श्रातास्त इन्द्र सोमा वातापे हवनश्रुतः स्वाहा । ३ । मनसा, "अग्निर्होता" ॥ वाग्घोता वातोध्वर्युर्दीक्षा पत्न्यापोभिगरो मनो हविस्तपसि जुहोमि वाचस्पतेऽच्छिद्रया वाचाऽच्छिद्रया जिह्वा दिवि देवा मृधद्धोता मैरयस्व स्वाहा ।४। मनसा, "वाग्घोता" ॥ महाहविर्होता सत्यहविरध्वर्युरचित्तपाजा अग्निदचित्तमना उपवक्ता नाधृष्यश्चाप्रतिधृष्यश्चाभिगरा अयास्य उद्गाता वाचस्पते विधे नामन्विधेम ते नाम विधेस्त्वमस्माकं नाम मा देवानां तन्तुश्छेदि मा मनुष्याणां स्वाहा ।५। मनसा "महाहवि०"। छन्दोभ्यः स्वाहा । ६ । मनसा छन्दोभ्यः । चातुर्होतृकाय स्वाहा ७ । मनसा चातु० ॥ यद्वेदव्रतं तदत्र व्रतं, पञ्च विकारानिनुक्रमिष्यामः ॥ ब्रह्मचारी बाढमिति प्रत्याह ॥ ब्रह्मचार्यसि, अपोशान, कर्म कुरु, दिवा मा सुष्वप्सीः, वाचं यच्छ, न चतुर्भिः

१ वृधदित्यपि पाठः । २ स्वाप्सीः । छन्दोभ्यश्चातुर्होतृकायेत्याहुतिद्वयं मनसा

सहासीथाः, न चतुर्णां समक्षं भुञ्जीथाः, न चतुर्भिः सह भुञ्जीथाः, एकतमो वा भुञ्जीथाः ॥ "पश्चादग्नेर्दर्भेषु० । अधीहि भोः सावित्रीत्रिजपपूर्वांश्चातुर्होतृकव्रतमन्त्रान्मे भवाननुब्रवीतु" ॥ ओंभूर्भुवः स्वस्तत्सवितुः० । चित्तिः स्रुगितिवाचयति ॥ चित्तिः स्रुक्० ।१। पृथिवी होता० ।२। अग्निर्होता० ।३। वाग्घोता० ।४। महाहवि० ।५। इति अनुवाकं वाचयित्वा, नमो ब्रह्मणे० "इति त्रिर्वाचयेत्" ॥ ऋतुतिथ्यादितन्त्रसमाप्तिः ॥ विमुच्य० । नयामि ॥ इति चातुर्होतृकम् ॥ १३ ॥

एवमेवापवर्गे वास आचार्याय ददाति वरं दक्षिणत आसीनाय ॥ अथापवर्गः । अग्निं परिसमुह्य पर्युक्ष्य परिषिच्य । आदौ पञ्च० । उत्तरतः सावित्राणि० चतुर्होतृभ्यः, छन्दोभ्यः, अपवर्गे चातुर्होतृकाय जुष्टं निर्वपामि । विष्णोर्म० ॥ एवं प्रोक्षामि । आज्यदर्शनम् ॥ आज्यभागान्ते । रेवतीस्त्वा "इत्यादि वसनादीननुमन्त्रयेत् । रेवतीस्त्वा० । इयं दुरु० । मित्रस्य चक्षुः० ।

सुश्रवः० ।” चित्तिः स्रुगिति सप्तप्रधानाहुतीर्जुहुयात् तेजोसि० ।
चित्तिः स्रुक् । १ । (मनसा) चित्तिः० ॥ पृथिवी होता । २ । (मनसा)
पृथिवी० ॥ अग्निर्होता । ३ । (मनसा) अग्निर्होता० ॥ वाग्घोता
४ । (मनसा) वाग्घोता० ॥ महाहवि । ५ । (मनसा) महाहवि० ॥
छन्दोभ्यः स्वाहा । ६ । (मनसा) छन्दोभ्यः० ॥ अपवर्गे चातुर्हो-
तृकाय स्वाहा । ७ । (मनसा) अपवर्गे चातु० ॥ प्रधानानन्तरं
समिदाधानम् । हिरण्यवर्णाः शुचयः । १ । यासां देवा । २ ।
यासां राजा । ३ । शिवेनमा० । ४ । अग्ने व्रतपते “इत्युपस्थाय
व्रतं विमुञ्चेत् ।” अग्ने व्रतपते व्रतमचारिषं तदशकं तत्ते प्रब्रू-
मस्तन्नो गोपाय । १ । एवं वायो० । २ । सूर्य० । ३ । ब्रह्मणा
व्रतपतयो व्रतमचारिषं तदशकं तद्वः प्रब्रूमस्तन्नो गोपाय ॥४॥
(इहाग्न्यादीनां क्रमः समान एव ॥ ) तत ऋतुतिथ्यादितन्त्र-
समाप्तिः । विमुच्य । नयामि । नात्र व्रतादेशः । न चतुर्होतृ-
मन्त्रोपदेशः । इति चातुर्होतृकापवर्गः ॥ १४ ॥

चातुर्होतृकापवर्गादनन्तरमारण्यव्रतानि तानि चरितानि [व्रतशिक्षादौ] ॥

अथ प्रवर्ग्यव्रतम् । अथात्र व्रतविधिः । (सर्वत्र रहस्यमन्त्रप्रयोगे प्रपत्तिं मार्जनं चोर्ध्वं वेदव्रतादविच्छिन्नं प्रवर्ग्यव्रतं चरिष्यंस्त्रीणि वर्षाणि द्विसंवत्सरं वापराह्णेऽधिवृत्तसूर्ये ग्रामस्यासन्निकाशे उदकान्तेऽग्निं प्रज्वाल्य तत्रादौ पूर्वेद्युःकर्म तस्मिन्नग्नौ परिसमुह्य पर्युक्ष्य । नमो वाचे इति प्रावर्ग्यिकीं पूर्वां शान्तिं पठेत् ॥) पुनरग्निं परिसमुह्य पर्युक्ष्य । शुक्रियं रुद्रस्य । [1]नमो वाचे नमो वाचस्पतये या वागुदिता या चानुदिता तस्यै वाचे नमः, नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रविद्भ्यो मा मामृषयो मन्त्रकृतो मन्त्रविदः परादुर्दैवीं वाचमुद्यासं शिवामजस्रां जुष्टां देवेभ्यः स्वधावतीं पितृभ्यः शुश्रूषेण्यां मनुष्येभ्यः तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु सुचक्षा अहमक्षिभ्यां सुवर्चा मुखेन

१ वत्सः सन्निधापयितव्यः ।

सुश्रुत्कर्णाभ्यां भूयासम् , ओंभूर्भुवःस्वः, प्राच्या त्वा दिशा अग्निना देवतया गायत्रेण च्छन्दसा वसन्तमृतुं प्रविशामि । दक्षिणया त्वा दिशा इन्द्रेण देवतया त्रैष्टुभेन च्छन्दसा ग्रीष्ममृतुं प्रविशामि । प्रतीच्या त्वा दिशा सवित्रा देवतया जागतेन छन्दसा वर्षामृतुं प्रविशामि । उदीच्या त्वा दिशा मित्रावरुणाभ्यां देवतयाऽऽनुष्टुभेन च्छन्दसा शरदमृतुं प्रविशामि । ऊर्ध्वया त्वा दिशा बृहस्पतिना देवतया पांक्तेन च्छन्दसा हेमन्तमृतुं प्रविशामि । [1]अनया त्वा दिशा प्रजापतिना देवतया अनाप्तेन च्छन्दसा शिशिरमृतुं प्रविशामि ॥ गायत्रीं च्छन्दः प्रविशामि, त्रिष्टुभं च्छन्दः प्रविशामि, जगतीं च्छन्दः प्रविशामि, अनुष्टुभं च्छन्दः प्रविशामि, पंक्तिं च्छन्दः प्रविशामि, अतिच्छन्दसं च्छन्दः प्रविशामि । च्छन्दांसि प्रविशामि। तानि नः पारयन्तु तानि नोऽवन्तु तानि स ऋच्छतु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥

१ अधरया । गायत्री छन्दः इत्यादिषु प्रायश्चित्तेन हीनप्रश्नकारः +

आपो अस्मान्प्रविशन्त्वापो अस्मासु जागृत आयुर्विश्वायुर्विश्व-
मायुर्व्यश्नवै सर्वमायुर्व्यश्नवै, दिव्यो गन्धर्वो भुवनस्य यस्पति-
रेकाव्यो मनसा विद्वीड्यः, तन्त्वा यामि ब्रह्मणा देव दैव्य-
न्नमस्ते अस्तु दिवि ते सधस्स्थम्, दिविपृष्ठो यजत सूर्यत्वग-
वयातो हरसो दिव्यस्य एकाव्यो मनुष्यः सुशेवः, मृळाद्गन्धर्वो
भुवनस्य यस्पतिरनवद्याभिः समजग्माभिरप्सरःस्वपि गन्धर्व आ-
सीत् समुद्र आसां सदनं व आहुस्ततः सध्या च परा च चर-
न्त्यभ्रिये दिद्युन्नक्षत्रिये याः, विश्वावसुं गन्धर्वं ससध्रे ताभ्यो नमो
अस्तु ता नो मृळयन्तु ता नः शर्म यच्छन्तु ता यं द्विष्मो यश्च
नो द्वेष्टि तमासां जम्भे दध्मः. आहुस्ते भग चक्षुषी ताभ्यां
विपश्य मामभि यदेतत्सारघं मधु तेन रूपमनाज्मि ते तेन
रूपमनग्धि मे, देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो
हस्ताभ्यां देवानां क्रतुभिर्देवाभ्यञ्जनैरभ्यञ्जे भगवन्नामासि, तस्य
त ऋचश्च यजूंषि च सामानि च वागग्ना अन्यच्चक्षुः सूर्येऽन्य-

त्सूर्येऽन्यदग्ना अन्यद्भगवान्भूयासम् , ऐळोसि चक्षुरसि श्रोत्रमसि पुरन्धिर्नाम वागसि येन शतक्रतुर्भागमुपजुह्वे तेन त्वोपह्वये भग, तद्वान्नरा सनयेदं स उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम्, दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा सुमतिरवोचत्, अग्निरीशो वसव्यस्याग्निर्महः सौभगस्य तान्यस्मभ्यं रासति ॥ इति प्रावर्ग्यिकी पूर्वा शान्तिः ॥ उद्वयन्तमित्युपस्थानम् । उद्वयन्तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ "उष्णीषं त्रिरावर्तं वेष्टयित्वा" शुक्रियं रुद्रस्य । आयुर्दा आयुर्मे देहि आयुषे नः पुनर्देहि, प्राणदाः प्राणं मे देहि आयुषे नः पुनर्देहि, व्यानदा व्यानं मे देहि आयुषे नः पुनर्देहि, अपानदा अपानं मे देहि आयुषे नः पुनर्देहि, चक्षुर्दा चक्षुर्मे देहि आयुषे नः पुनर्देहि, श्रोत्रदाः श्रोत्रं मे देहि आयुषे नः पुनर्देहि, वर्चोदा वर्चो मे देहि आयुषे नः पुनर्देहि ।

१ उस्रमित्यपि पाठः ।

“एतानि सप्त यजूंषि । (सप्तानामपि आयुषे नः पुनर्देहि इति साधारणोऽनुषङ्गः)॥” नमो रुद्राय दिविषदे यस्य वर्षमिषवस्तस्मै नमस्ते नमः समरे स मा मा हिंसीः । नमो रुद्रायाऽन्तरिक्षसदे यस्य वात इषवस्तस्मै नमस्ते नमः समरे स मा मा हिंसीः । नमो रुद्राय पृथिवीषदे यस्यान्नमिषवस्तस्मै नमस्ते नमः समरे स मा मा हिंसीः॥ ब्रह्मण उपस्तरणमसि ब्रह्मणे त्वोपस्तृणामीळायै वास्त्वसि वास्तुमद्वास्तुमान्भूयासमवास्तुः स भूयाद्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः । प्रतिष्ठासि प्रतिष्ठा मे भूयादप्रतिष्ठः स भूयाद्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ आ वात वाहि भेषजं वि वात वाहि यद्रपः । त्वं हि विश्वभेषजो देवानां दूत ईयसे । यद्दो वात ते गृहेऽमृतस्य निधिर्हितः । ततो नो धेहि जीवसे ततो नो अभयं कृधि । द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभिः । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः॥ पृथिवी शान्तिर-

न्तरिक्षं शान्तिर्द्यौः शान्तिर्दिशः शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिस्त्वयाहं शान्त्या सर्वशान्त्या मह्यं द्विपदे चतुष्पदे शान्तिं करोमि शान्तिर्नो अस्तु शान्तिरसि शान्तिः शान्तिः शान्तिः । या वागुदिता या चानुदिता शिवा नः शन्तमा भव सुमृळीका सरस्वति मा ते व्योम सन्दृशि । मित्रस्य त्वा चक्षुषा प्रेक्षे मित्रस्य त्वा चक्षुषान्वीक्षे, सूर्यस्य त्वा चक्षुषा प्रेक्षे सूर्यस्य त्वा चक्षुषाभिवीक्षे । मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसि द्युम्नं चित्रश्रवस्तमम् । मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसि सत्यं चित्रश्रवस्तमम् ॥ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन, महे रणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयतेह नः, उशतीरिव मातरः । तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ, आपो जनयथा च नः ॥ आपः पृणीत भेषजं वरूथं तन्वो मम, ज्योक्च सूर्यं दृशे । शन्नो देवीरभिष्टय आपो भवन्तु पीतये, शँय्योरभिस्रवन्तु नः । शन्नो मित्रः शँ वरुणः

शन्नो भवत्वर्यमा । शन्न इन्द्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः॥ शन्नो मित्रः शं वरुणः शन्नो अस्त्वर्यमा । शन्न इन्द्रश्चाग्निश्च शन्नो विष्णुरुरुक्रमः ॥ त्यमू षु वाजिनं देवजूतं सहोवानन्तरुतारं रथानाम् । अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहाहुयेम ॥ कया नश्चित्र आभुवदूती सदावृधः सखा, कया शचिष्ठया वृता । कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः, दृढा चिदारुजे वसु । अभीषुणः सखीनामविता जरितॄणाम, शतं भवास्यूतिभिः । "शुक्रियं रुद्रस्य ।" य उद्गात्पुरस्तान्महतो अर्णवाद्विभ्राजमानः सरिरस्य मध्ये । स मामृषभो रोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु । यद्ब्रह्मावादिष्म तन्मा मा हिंसीत्सूर्याय विभ्राजाय वै नमो नमः ॥ इति प्रावर्ग्यिकी उत्तरा शान्तिः ॥ अग्निं परिषिञ्चामि ३ । विभूरसीत्यादि अनुवाकेनोपस्थाय–एधोसीति समिधामाधानम् । तेजोसीत्यग्निमनुमन्त्रयते । अपोअद्येत्युपस्थानम् । ततः प्रातः प्रागुदयादित्यादि ॥ इत्यग्नीन्धनम् ॥ नमो वाचे० । "इति पूर्वां शान्तिं

पठित्वा ।" उष्णीषं निवार्य । इयं कन्या, अयं वत्सः, अयमादित्यः, इदं क्षीरौदनम् । आयुर्दा० इत्युत्तरां शान्तिं पठेत् ॥ विमुच्य० । इति पूर्वेद्युःकर्म ॥ २ ॥

(कैश्चिद्दिनद्वयव्यापि यज्ञोपवीतसंस्कारकर्म क्रियते । तत्रायं विधिः, प्रथमदिने कलशे प्रधानानि सर्वाणि दत्त्वा, पूजां च पूर्वनिर्दिष्टामखिलां विधाय चातुर्होतृकापवर्गान्तं कर्म निर्वर्त्य प्रवर्ग्यव्रतस्य पूर्वेद्युः कर्म कृत्वाग्निं विमुच्य, परिसमुह्य पर्युक्ष्य (१) च, पृथगग्नौ वैश्वदेवादि कुर्यात् ॥ गुडादिना क्षेत्रेशबलिः ॥ सव्यञ्जनमन्नादि च सङ्कल्पनीयमेव । सूर्याचन्द्रमसौ तथैव स्थाप्यौ ॥ अग्निरपि ज्वलित एव स्थाप्यः । न विसर्जनीयः । मण्डलं द्वितीयदिने कर्तव्यम् ॥ अथ द्वितीयदिने पुनरपि गन्धपुष्पादिना सङ्क्षिप्तां कलशार्चां सूर्यसोमार्चां ऋषिपूजां ब्रह्मपूजां च धूपदीपादिसंकल्प

---

१ यस्मिन्नग्नौ उपनयनहोमः कृतस्तं स्नानं यावद्धारयेत् , तस्मिन्नेव त्रैविद्यकादयो व्रतहोमाः, तमेव सायं प्रातरिन्धीतेतिहि गृह्यकाराः ।

पूर्विकां विधाय विहितस्नानसन्ध्योपासनाय ब्रह्मचारिणे रेवती-स्त्वेत्यादिना वसनादि दत्त्वाभिवादनं च तं कारयित्वा पुनरपि पात्रंतिलाक्षतैर्मिश्रमित्यारभ्य निर्दग्धंरक्षोऽग्निं परिसमुह्य ॥ ६ ॥ इत्यादिना प्रवर्ग्यव्रतमारभेत ॥ [अभिवादनं च यथा-पादावुप-संगृह्य अभिवादये देवशर्माहं भोः- आयुष्मान्भव सौम्य देवश-र्म ३ न् ] ॥ ) पुनरग्निं परिसमुह्य पर्युक्ष्य परिषिच्य । आदौ पश्च० । उत्तरतः संस्तीर्ण० स्रुचं पूरयित्वा सावित्रादिना यथा दैवतं निर्वपतीत्यन्तम् ॥ नमो वाचे० । सावित्राणि० । ब्रह्मणे, प्रजापतये, घर्माय सम्राजे, सूर्याय विभ्राजे, देवेभ्यो घर्मपेभ्यः, पितृभ्यो घर्मपेभ्यः, छन्दोभ्यः प्रवर्ग्यव्रताय ८ जुष्टं निर्वपामि ॥ आयुर्दा० । विष्णोर्मनसेति० । सावित्रादिना यथा दैवतं प्रोक्षती-त्यन्तम् । नमो वाचे० । सावित्राणि० । ब्रह्मणे० । ८। जुष्टं प्रोक्षामि । आयुर्दा० आज्यदर्शनं० आत्मनो० ब्रह्मणे० ८ । आज्यभागान्ते । रेवतीस्त्वा० इत्यादिना वसनादीननुमन्त्रयेत् रेवतीस्त्वा० इयन्दुरु०

मित्रस्य० सुश्रवः० ॥ नमो वाचे० । ततः समिदाधानम् । पृथिवी समित्तामग्निः समिन्धे तामहं समिन्धे सा मा समिद्धा सुषमिद्धा तेजसा वर्चसा यशसा ब्रह्मवर्चसेन समिन्ध्यात् ॥ १ ॥ अन्तरिक्षं समित्तां वायुः समिन्धे ता० ॥ २ ॥ द्यौः समित्तां सूर्यः समिन्धे० ॥ ३ ॥ पाणी प्रक्षाल्य उपस्थानम् । अग्ने व्रतपते सम्राळसि व्रतपा असि व्रतभृदसि व्रतपातिरसि व्रतमालभे तत्ते प्रब्रवीमि तच्छकेयं तेनर्ध्यासम् ॥ १ ॥ वायो व्रतपते० ॥ २ ॥ सूर्य व्रतपते० ॥ ३ ॥ "उदुत्यमिति दशर्चेन प्रथमेन प्रतीकानुवाकेन स्रुवेण प्रत्यृचमाज्यं जुहुयात् ।" उदुत्यं जातवेदसं देवं वहन्ति केतवः, दृशे विश्वाय सूर्यम् ॥ १ ॥ इममू षु त्वमस्मभ्यं सनिं गायत्रं नवीयांसम्, अग्ने देवेषु प्रवोचः[1] ॥ २ ॥ समिन्द्र नो मनसा नेषि गोभिः सं सूरिभिर्हरिवः सं स्वस्त्या । सं ब्रह्मणा देवकृतं यदस्ति सं देवानां सुमत्या यज्ञियानाम् ॥ ३ ॥ सं वर्चसा पयसा सन्त-

---

१ प्रवोचात् इत्यपि पाठः ।

नृभिरगन्महि मनसा सं शिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनु नो मार्ष्टु तन्वो यद्विलिष्टम् ॥ ४ ॥ अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः । अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततन्थ ॥ ५ ॥ या वाङ्कशा मधुमत्यश्विना सूनृतावती, तया यज्ञं मिमिक्षतम् ॥ ६ ॥ धाता दधातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनत् ॥ ७ ॥ धाता प्रजानामुत राय ईशिषे धातेदं विश्वं भुवनं जजान । सन्दाशुषे किरति भूरि वामं वयं स्याम पतयो रयीणाम् ॥ ८ ॥ त्रयस्त्रिंशत्तन्तवो यान्वितन्वत इमं यज्ञं स्वधया ये ददन्ते । तेषां छिद्रं प्रतिदध्मो यदत्र स्वाहाऽयं यज्ञो अप्येतु देवान् ॥ ९ ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्, समूढमस्य पांसुरे ॥ १० ॥ ( उक्तं स्थालीपाकस्य व्रतहोमः । ) ब्रह्मणे स्वाहा, प्रजापतये स्वाहा, घर्माय सम्राजे स्वाहा, सूर्याय विभ्राजे स्वाहा, देवेभ्यो घर्मपेभ्यः स्वाहा, पितृभ्यो घर्मपेभ्यः स्वाहा, छन्दोभ्यः स्वाहा, प्रवर्ग्यव्रताय स्वाहा, ॥ "पश्चादग्नेर्दर्भेष्वासीनं

कृतपादोपसंग्रहणं सावित्रीत्रिजपपूर्वं शुक्रियं प्रथमानुवाकमध्या-
प्यानुशास्ति ॥ अधीहि भोः सावित्री त्रिजपपूर्वान्प्रवर्ग्यव्रतम-
न्त्रान्मे भवाननुब्रवीतु ।" ओंभूर्भुवःस्वस्तत्स० ३ । शुक्रियं रुद्रस्य ।
युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
विहोत्रादधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥
[1]देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामा-
ददे नारीःस्थ ॥ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे उपप्रयन्तु
मरुतः सुदानव इन्द्र प्राशूर्भवा सचा । प्रैतु ब्रह्मणस्पतिः प्रदेव्य-
तु सूनृता, अच्छावीरन्नर्यम्पंक्तिराधसन्देवा यज्ञं नयन्तु नः ।
देवी द्यावापृथिवी देवयजनेनुमीमांसाथामृतस्यध्यांसमद्य मखस्य
शिरो मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ १ ॥ एवं । इयत्यग्र-
आसीर्ऋतस्यध्यांसमद्य म० ॥ २ ॥ देवीवम्रिप्रयोस्य भूतस्य प्रथ-
मजार्ऋतस्यध्यांसमद्य० ॥ ३ ॥ इन्द्रस्योजोस्यृतस्यध्यांसमद्य० ।४।

---

१ देवस्य वः

प्रजापतेस्तनूरस्यृतस्यघर्मासमद्य० ॥ ५ ॥ मधु त्वा मधुना करोतु यज्ञस्य पदे स्थः, गायत्रोसि त्रैष्टुभोसि जागतोसि मखोसि मखस्य रास्नासि सूर्यस्य हरसाश्राय विष्णोर्निष्प[1]दसि प्राजापत्यं देवानां त्वा पत्नी वृष्णो अश्वस्य निष्पदा धूपयन्तु अर्चिषे त्वा शोचिषे त्वा हरसे त्वा, मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसि द्युम्नं चित्रश्रवस्तमम्, देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्या । अव्यथमानाः पृथिव्यामाशा दिश आपृण उत्तिष्ठ बृहद्भवोर्ध्वस्तिष्ठ ध्रुवस्त्वम् ॥ इदमहममुमामुष्यायणममुष्याः पुत्रं तेजसा ब्रह्मवर्चसेन समर्धयामि । इदमहममुमामुष्यायणममुष्याः पुत्रं तेजसा ब्रह्मवर्चसेन व्यर्धयामि । इदमहममुमामुष्यायणममुष्याः पुत्रमोजसा वीर्येण समर्धयामि । इदमहममुमामुष्यायणममुष्याः पुत्रमोजसा वीर्येण व्यर्धयामि । इदमहममुमामुष्यायणममुष्याः पुत्रमूर्जा पशुभिः समर्धयामि । इदमहममु-

१ निष्पदोसि ।

मामुष्यायणममुष्याः पुत्रमूर्जा पशुभिर्वर्धयामि । इदमहममुमामुष्यायणममुष्याः पुत्रं तेजसा ब्रह्मवर्चसेन, ओजसा वीर्येण, प्रजया पशुभिरन्नाद्येन समर्धयामि । ऋजवे त्वा, साधवे त्वा, सुक्षित्यै त्वा सूर्यस्य त्वा चक्षुषान्वीक्षे, [1]छृणतु त्वा वाक्, छृणतु त्वोर्क्, छृणतु त्वा पयः, छृणतु त्वा रसः, छृणतु त्वा हविः, छृणतु त्वा सोमः, छृणतु त्वा यज्ञः, छृणतु त्वा ब्रह्म, छृणतु त्वा प्रजापतिः ॥ यद्बेदव्रतं तदत्र व्रतं ब्रह्मचारी बाढमिति प्रत्याह । 'पञ्च विकाराननुक्रमिष्यामः ।' ब्रह्मचार्यसि, अपोशान, कर्म कुरु, दिवा मा सु[2]ष्वप्सीः, वाचं यच्छ, मा मलवद्वाससोऽद्राक्षीः, मा सम्भाषयेथाः, मलवद्वाससो भवन्ति, उदक्याः सूतिकाः श्वपाका अशुचयोऽन्त्यावसायिन इति, न श्मशानं गच्छेः, न शवशरीरं पश्येः, अनातृणं शवशरीरं दृष्ट्वा त्रिरात्रमुपवसेः, मधुमांसे प्राश्यालभ्य वा शरीरं पुनर्व्रतमालभेथाः, यानि हविर्दूषणानि तानि भोज-

---

१ छृणत्तु ॥ २ स्वाप्सीः ।

नदूषणानि, नोच्छिष्टं भुञ्जीथाः, नोच्छिष्टमन्यस्मै दद्याः मा गुरु भुञ्जीथाः व्याधितविषयमेतत्। येनेच्छेत्तेन चिकित्सेत्, कामं गुरूच्छिष्टमश्नीयादिति ह्याचार्याः । न नक्तं भुञ्जीथाः, उपज्वाल्य वा भुञ्जीथाः, न मृन्मये भुञ्जीथाः, न प्रतिसन्दध्या इत्येके। स्थानासनं पर्वान्तेषूपवासः, वाग्यमनं च, किंचिदप्रयतं दृष्ट्वा प्राणायामैः स शुद्ध्यति, सन्दर्शने त्रयः कार्याः संव्याहृत्य तु सप्त, सूर्यासमासाद्य तु द्वादश, सर्वत्र ज्योतिर्दर्शनमुदकोपस्पर्शनम्, सूर्याचन्द्रमसौ गौरग्निर्ब्राह्मण इत्येतानि पञ्च ज्योतींष्येतेषामेकेनापि शुद्ध्यति, अबद्धं मनो दरिद्रं चक्षुः, सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हिंसीरिति, सूर्यं दिवाग्निं रात्रौ रेतसि स्कन्ने पुनर्मामैत्विन्द्रियमिति जपेत् ॥ ॐ पुनर्मामैत्विन्द्रियं पुनरायुः पुनर्भगः। पुनर्ब्राह्मणमैतु मां पुनर्द्रविणमैतु मा ॥ यन्मेऽद्य रेतः पृथिवीमस्कन्यदोषधीरप्यसरद्यदपः, तदहं पुनराददे ॥ यन्मे रेतः प्रसिच्यते यन्म

१ रप्यसरत्

आजायते पुनः । यद्वा मे प्रतितिष्ठति तेन माममृतं कुरु तेन सुप्रजसं कुरु ॥ नमो ब्रह्मणे " इति त्रिः पठेत् ।" आयुर्दा० । ऋतुतिथ्यादितन्त्रसमाप्तिः ॥ विमुच्य, ३ । नयामि ॥ इति प्रवर्ग्यव्रतम् ॥ १५ ॥

अथापवर्गे प्रवर्ग्यव्रतम् ॥ आदौ पूर्वेद्युः कर्म । अग्निं परिसमुह्य पर्युक्ष्य ॥ नमो वाचे० । उद्वयन्तमित्यादित्यमुपस्थाय । उष्णीषं त्रिरावर्तं वेष्टयित्वा । आयुर्दा० । परिषिञ्चामि ३ । विभ्रूरसि० इत्यनुवाकेनोपस्थाय । एधोसीति समिदाधानं । तेजोसीत्यग्निमनुमन्त्रयते । अपो अद्येत्युपस्थानम् । ततः प्रातः प्रागुदयादित्यादिसर्वम् साध्वधीत इत्यन्तम् ॥ नमो वाचे० । उष्णीषं निवार्य । इयं कन्या अयं वत्सः अयं आदित्यः इदं क्षीरौदनम् ॥ आयुर्दा० । विमुच्य । इति पूर्वेद्युः कर्म ॥ ६ ॥ अग्निं परिसमुह्य पर्युक्ष्य परिषिच्य । आदौ पश्व० । उत्तरतः संस्तीर्य स्रुचं पूरयित्वा सावित्रादिना यथादैवतं निर्वपतीत्यन्तं । नमो वाचे० ।

सावित्राणि० । ब्रह्मणे, प्रजापतये, घर्माय सम्राजे, सूर्याय विभ्राजे, देवेभ्यो घर्मपेभ्यः, पितृभ्यो घर्मपेभ्यः, छन्दोभ्यः, अपवर्गे प्रवर्ग्यव्रताय, जुष्टं निर्वपामि ॥ आयुर्दा० । विष्णोर्मनसेति० सावित्रादिना यथादैवतं प्रोक्षतीत्यन्तं । नमो वाचे० । सावित्राणि । ब्र० प्र० ॥ ८ ॥ जुष्टं प्रोक्षामि । आयुर्दा० । पात्राणि च तूष्णीं० । आज्यदर्शनमात्मनो० ब्रह्मणे ८ ॥ आज्यभागान्ते ॥ रेवतीस्त्वा० इत्यादिना वसनादीननुमन्त्रयेत् ॥ रेवतीस्त्वा० इयंदु० मित्रस्य० सुश्रवः० ॥ नमो वाचे० ("मा नो घर्म" इत्येकोनविंशतर्गिभरुत्तमेन प्रतीकानुवाकेन स्रुवेण प्रत्यृचमाज्यं जुहुयात् ॥ ) शुक्रियं रुद्रस्य । मा नो घर्म व्यथितो विव्यथो नो मा नः परमधामाहुतो नैः । मो ष्वस्मांस्तमस्यन्तराधा मा रुद्रियासो अभिकुर्वतो नः ॥ १ ॥ मा नः क्रतुभिरीळतेभिद्विषो अस्मान्सुनीते मापराधाः । मा नो अग्निर्निर्ऋतिमरातिं मा नो द्यावापृथिवी हेळते हेळयेथाम् ॥ २ ॥ अनु नो मित्रावरुणा इहावतामनुर्दाध्याना अभि नः सखायौ ।

आदित्यानां प्रसूतिर्हिनिरुग्रा शिवा [1]काष्टा हविषः परि णो वृणक्तु ॥ ३ ॥ विधुन्दद्राणं समने बहूनां युवानं सन्तं पलितो जगार । देवस्य पश्य काव्यं महि त्वा द्यां ममार सद्यः समानः ॥ ४ ॥ ओंभूः ॥ ५ ॥ ओंभुवः ॥ ६ ॥ ओंस्वः ॥ ७ ॥ ओंभूर्भुवःस्वः ॥८॥ उदुत्यं जातवेदसं देवं वहन्ति केतवः, दृशे विश्वाय सूर्यम् ॥९॥ उद्वयन्तमसस्परि० ॥१०॥ उदु तिष्ठ स्वध्वराव नो [2]दिव्या कृपा दृशे च भासा । बृहता सुशुक्वभिरग्ने याहि सुशस्तिभिः ॥११॥ ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता । ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥ १२ ॥ पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यंहसः ॥१३॥ सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया, विश्वप्स्न्या विश्वतस्परि ॥१४॥ धाता दधातु नो रयिमीशानो जगतस्पतिः, स नः पूर्णेन वावनत ॥१५॥ धाता प्रजानामुत राये ईशिषे धातेदं विश्वं भुवनं जजान॰

१ पाष्टा इत्यपि पाठः । २ देव्या ।

सन्दाशुषे किरति भूरिवामं वयं स्याम पतयो रयीणाम् । १६ । अग्न आयूंषि पवस आसुवोर्जमिषञ्च नः, आरे बाधस्व दुच्छुनाम् ॥ १७ ॥ अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम्, दधद्रयिं मयि पोषम् ॥ १८ ॥ त्वन्नो अग्ने वरुणस्य विद्वा० ॥१९॥ स त्वन्नो अग्नेवमोभवोती नेदिष्ठो० ॥ २० ॥ वायुरग्रेगा यज्ञप्रीस्साकं गन्मनसा यज्ञम्, शिवो नियुद्भिः शिवाभिः ॥ २१ ॥ प्रयाभिर्यासि दाश्वांसमच्छानियुद्भिर्वाय इष्टये दुरोणे । नि नो रयिं सुभोजसं युवस्व नि वीरं गव्यमश्व्यं च राधः ॥ २२ ॥ हिरण्यगर्भ इति सप्त । हिरण्यगर्भः० ॥ २३ ॥ यः प्राणतो० ॥ २४ ॥ य ओजोदा० ।२५। येन द्यौ० ॥ २६ ॥ य इमे द्या० ॥ २७ ॥ यस्येमे विश्वे० ॥२८॥ यं क्रन्दसी 'अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने । यत्राधिसूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥ २९ ॥ "उक्तं स्थालीपाकस्य व्रतहोमः ।" ब्र० प्र० घ० सू० दे० पि०

१ अपसा ।

छ्रु० अपवर्गे प्रवर्ग्यव्रताय स्वाहा ॥ " प्रधानानन्तरं समिदाधानं । यौः समित्तामितितिस्रः समिध आधाय । " द्यौः समित्तां सूर्यःसमिन्धे तामहं समिन्धे सा मा समिद्धा सुषमिद्धा तेजसा वर्चसा यशसा ब्रह्मवर्चसेन समिन्ध्यात् ॥ १ ॥ अन्तरिक्षं समित्तां वायुः समिन्धे० ॥ २ ॥ पृथिवी समित्तामग्निः समिन्धे० ॥ ३ ॥ सूर्यव्रतपत इति व्रतविमोकः ॥ सूर्य व्रतपते सम्राळसि व्रतपा असि व्रतभृदसि व्रतपतिरसि व्रतमचारिषं तदशकं तत्ते प्रब्रूमस्तन्नो गोपाय । वायो व्र० ॥ अग्ने व्रत०॥ आयुर्दा० । ऋतुतिथ्यादितन्त्रसमाप्तिः । विमुच्य ३ । नयामि ॥ इत्यपवर्गे प्रवर्ग्यव्रतम् ॥ १६ ॥

अथारुणव्रतम् ॥ आदौ पूर्वेद्युः कर्म । अग्निं परिसमुह्य पर्युक्ष्य । नमो वाचे० । उद्वयन्तमस० इत्यादित्यमुपस्थाय ॥ उष्णीषं त्रिरावर्तं वेष्टयित्वा ॥ आयुर्दा० । परिषिच्य० ३ । विभूसि इत्याद्यनुवाकेनोपस्थाय एधोसीति समिदाधानम् । तेजोसी

त्योंग्निमनुमन्त्रयते । अपो अद्येत्युपस्थानम् । ततः प्रातः प्रागुदयादित्यादि साध्वधीत इत्यन्तम् ॥ नमो वाचे० । उष्णीषं निवार्य । इयं कन्या० । अयं वत्सः । अयमादित्यः । इदं क्षीरौदनम् । आयुर्दा० । विमुच्य० ॥ इति पूर्वेद्युः कर्म ॥ ४ ॥ परिसमुह्य पर्युक्ष्य परिषिच्य । आदौ पश्व० । उत्तरतः संस्तीर्णे० । स्रुचं पूरयित्वा सावित्र्यादिना यथा दैवतं निर्वपति । ( एवं स्वाध्यायधर्मेणारण्येऽधीयीत तपस्वी पुण्यो भवति तपस्वी पुण्यो भवतीति ॥ ) ओं आपमापमपः सर्वा अस्मादस्मादितोऽमुतः अग्निर्वायुश्च सूर्यश्च सह सञ्चस्करर्धिया । वाय्वश्वा रश्मिपतयो मरीच्यात्मानो अद्रुहः । देवीर्भुवनसूवरीः पुत्रवत्त्वायिमेऽसुवः । महानाम्नी महामाना महायामा महासोमासस्परि । देवीः पर्जन्यसूवरीः पुत्रवत्त्वायिमं सुव । अपाश्नुष्टिमपारक्षमपाश्नुष्टिमपारसम् । अपाघमनुजावर्ति मम देवीर्क्षते[1] हिताः । वज्रन्देवीरनुदिताः स्थ वरुणं देवसूवरीः । आदित्यानुदितं देवीर्योनि[2]नो-

१ देवीरुदिताः । २ योगिनो ।

र्दैवमुदीषत ॥ भद्रङ्कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षिभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ केतवोऽरुणासश्चर्षयो वातरशनाः प्रतिष्ठां शतधाय समाहिताः । अथो सहस्रधाय सं शिवा नः शन्तमा भवाथ दिव्या आप ओषधयो वनस्पतयः सुमृळीका सरस्वति मा ते व्योम सन्दृशि ॥ (इत्यारुण्यौ पूर्वोत्तरे शान्ती ।) सावित्राणि० । अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये संवत्सराय ऋतुभ्यः अरुणेभ्यःकाण्वर्षिभ्यः छन्दोभ्यः अरुणव्रताय जुष्टं निर्वपामि ॥ आपमापं० । विष्णोर्मनसेति० । सावित्रादिना यथादैवतं प्रोक्षति ॥ आपमापं० । सावित्राणि० । अ० वा० सू० ब्र० प्र० सं० ऋ० अ० छ० अरुणव्रताय जुष्टं प्रोक्षामि ॥ आपमापं० । पात्राणि च तूष्णीं० । आज्यदर्शनं० आत्मनो० अग्नये० इत्यादि इदमाज्यमर्पयामि नमः ।

आज्यभागान्ते । रेवतीस्त्वा० इत्यादिना वसनादीननुमन्त्रयेत् ॥ रेव० इयं दुरुक्ता० मित्रस्यचक्षुः० सुश्रवः० ॥ नमो वाचे० । समिद्वाधानम् ॥ पृथिवी समित्तामग्निः समिन्धे तामहं समिन्धे सा मा समिद्धा सुषमिद्धा तेजसा वर्चसा यशसा ब्रह्मवर्चसेन समिन्ध्यात् । अन्तरिक्षं समित्तां वायुः० । द्यौः समित्तां सूर्यः० । (पाणी प्रक्षाल्य) उपस्थानं । अग्ने व्रतपते सम्राळसि व्रतपा असि व्रतभृदसि व्रतपातिरसि व्रतमालभे तत्ते प्रब्रवीमि तच्छकेयं तेनर्ध्यासम् । वायो व्र० । सूर्य व्र० ॥ उदुत्यमिति दशर्चेन० स्रुवेण प्रत्यृचमाज्यं जुहुयात् ॥ दश ऋचः ॥ आयुर्दा० । आपमापं० ॥ " उक्तं स्थालीपाकस्य व्रतहोमः । " तेजोसि० । अ० वा० सू० ब्र० प्र० सं० ऋ० अ० छ० अरुण० स्वाहा ॥ " पश्चादग्नेर्दर्भेषु० । अधीहि भोः सावित्रीत्रिजपपूर्वानरुणव्रतमन्त्रान्मे भवाननुब्रवीतु ॥ " ओंभूर्भुवःस्वस्तत्सवितु० ३ । " अरुणोरुणानामित्यनुवाकं वाचयित्वा ॥ " अरुणोरुणानां केतू-

नाम् ॥ योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायो-
देति । मा मे प्रजाया मा पशूनां मा मम प्राणानादायोद्गाः ।
असौ योऽस्तमेति स सर्वेषां भूतानां प्राणानादायास्तमेति ।
मा मे प्रजाया मा पशूनां मा मम प्राणानादायास्तङ्गाः । असौ
य आपूर्यते स सर्वेषां भूतानां प्राणैरापूर्यते । मा मे प्रजाया
मा पशूनां मा मम प्राणैरापूरिष्ठाः । असौ य उपक्षीयते स
सर्वेषां भूतानां प्राणैरुपक्षीयते । मा मे प्रजाया मा पशूनां मा
मम प्राणैरुपक्षेष्ठाः । अमूनि यानि नक्षत्राणि भूतानि चोपसर्पन्ति
चोत्सर्पन्ति च । तानि सर्वेषां भूतानां प्राणैरुपसर्पन्ति चोत्सर्पन्ति
च । मा मे प्रजाया मा पशूनां मा मम प्राणैरुपसृपत मोत्सृपत ॥
अयं संवत्सरः ॥ स सवेषां भूतानां प्राणैरुपप्रसर्पति चोत्सर्पति
च । मा मे प्रजाया मा पशूनां मा मम प्राणैरुपप्रसृप मोत्सृप ॥
इमे ऋतव-स्ते सर्वेषां भूतानां प्राणैरुपप्रसर्पन्ति चोत्सर्पन्ति च ।
मा मे प्रजाया मा पशूनां मा मम प्राणैरुपप्रसृपत मोत्सृपत ॥

इमे मासाश्चार्धमासा स्ते सर्वेषां भूतानां प्राणैरुपप्रसर्पन्ति चोत्सर्पन्ति च । मा मे प्रजाया मा पशूनां मा मम प्राणैरुपप्रसृपत मोत्सृपत ॥ इदमह-स्तत्सर्वेषां भूतानां प्राणैरुपप्रसर्पति चोत्सर्पति च । मा मे प्रजाया मा पशूनां मा मम प्राणैरुपप्रसृप मोत्सृप ॥ इयं रात्रिः, सा सर्वेषां भूतानां प्राणैरुपप्रसर्पति चोत्सर्पति च । मा मे प्रजाया मा पशूनां मा मम प्राणैरुपप्रसृप मोत्सृप ॥ यद्वेदव्रत तदत्रव्रतं पञ्चविकारानतुक्रमिष्यामः ब्रह्मचार्यसि, अपोशानेत्यादि ॥ नमो ब्रह्मणे० " इत्यन्तं ।" आपमापं० । ऋतुतिथ्यादितन्त्रसमाप्तिः विमुच्य ३ । नयामि ॥ इत्यरुणव्रतम् ॥ १७ ॥

अथापवर्गेऽरुणव्रतम् ॥ आदौ पूर्वेद्युः कर्म । परिसमुह्य पर्युक्ष्य० । नमो वाचे० । उद्वयन्त० इत्यादित्यस्योपस्थानम् । उष्णीषं त्रिरावर्तं वेष्टयित्वा ॥ आयुर्दा० । परिषिच्य० । विभूरसि० इत्युपस्थानम् । एधोसीतिसमिदाधानम् । तेजोसीत्यग्निमनुमन्त्र-

यते । अपो अद्येत्युपस्थानम् । ततः प्रातः प्रागुदयादित्यादि० साध्वधीत इत्यन्तम् ॥ नमो वाचे० । उष्णीषं निवार्य । इयं कन्या अयं वत्सः अयमादित्यः इदं क्षीरौदनम् ॥ आयुर्दा० । विमुच्य ३ । इति पूर्वेद्युः कर्म ॥ ५ ॥ अग्निं परिसमुह्य पर्युक्ष्य परिषिच्य परिस्तीर्यादौ पश्च० ॥ उत्तरतः संस्तीर्णे० । यथादैवतं निर्वपतीत्यन्तं । आपमापं० । सावित्राणि० । अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये संवत्सराय ऋतुभ्यः, अरुणेभ्यः काण्वर्षिभ्यः, छन्दोभ्यः अपवर्गे अरुणव्रताय जुष्टं निर्वपामि ॥ आपमापं० । विष्णोर्मनसेति० सावित्रादिना यथादैवतं प्रोक्षतीत्यन्तं । आपमापं० । सावित्राणि० । अ० वा० सू० ब्र० प्र० सं ऋ० अ० छ० अपवर्गेऽरुणव्रताय जुष्टं प्रोक्षामि । आपमापं० । पात्राणि च तूष्णीं० । आज्यदर्शनम् । आत्मनो० अग्नये इत्यादि इदमाज्यं० ॥ आज्यभागान्तं । रेवतीस्त्वा० इयन्दुरु० मित्रस्य० सुश्रवः० ॥ नमो वाचे० । मा नो घर्म इत्येकोनत्रिंशतर्गिभरुक्त-

मेन प्रतीकानुवाकेन स्रुवेण० ॥ २६ ॥ ऋचः० । आयुर्दा० । आपमापं० । उक्तं स्थालीपाकस्य व्रतहोमः तेजोसि० ॥ अ० वा० सू० ब्र० प्र० सं० ऋ० अ० छं० अपवर्गेऽरुणव्रताय स्वाहा ॥ आपमापं० । नमो वाचे० । प्रधानानन्तरं समिदाधानम् ॥ द्यौः समित्तां सूर्यः समिन्धे तामहं समिन्धे सा मा समिद्धा सुषमिद्धा तेजसा वर्चसा यशसा ब्रह्मवर्चसेन समिन्ध्यात् । अन्तरिक्षं समित्तां वायुः० । पृथिवी समित्तामग्निः समिन्धे० । उपस्थानम् ॥ सूर्य व्रतपते सम्राळसि व्रतपा असि व्रतभृदसि व्रतपतिरसि व्रतमचारिषं तदशकं तत्ते प्रब्रूमस्तन्नोगोपाय । वायो-व्रतपते० अग्नेव्रत० । आयुर्दा० । ऋतुतिथ्यादितन्त्रसमाप्तिः ॥ विमुच्य ३ । नयामि ॥ इत्यपवर्गेऽरुणव्रतम् ॥ १८ ॥

अथौपनिषदव्रतम् ॥ आदौ पूर्वेद्युः कर्म । परिसमुह्य पर्युक्ष्य नमो वाचे० । उद्वयन्तमित्युपस्थानम् । उष्णीषं त्रिरावर्तं वेष्टयित्वा । आयुर्दा० । परिषिच्य ३ । विभूरसि इत्युपस्थाय एधो-

सीति समिदाधानं, तेजोसीत्यग्निमनुमन्त्रयते । अपो अद्योत्युपस्थानं । ततः प्रातरित्यादि ॥ नमो वाचे० । उष्णीषं निवार्य । इयं कन्या० इत्यादि । आयुर्दा० । विमुच्य ३ । इति पूर्वेद्युः कर्म ॥ ६ ॥ परिसमुह्य पर्युक्ष्य परिषिच्य । आदौ पञ्च० । उत्तरतः० यथा दैवतं निर्वपति इत्यन्तं ॥ [ब्राह्मणानि] "सुमन्तोः कश्यपस्य तदन्तेवासिनां चार्षम्" ॐ शन्नो मित्रः शँ वरुणः शन्नो भवत्वर्यमा । शन्न इन्द्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः । नमो ब्रह्मणे नमो वायवे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि ऋतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारं शान्तिः शान्तिः शान्तिः । सह ना अवतु सह नौ भुनक्तु सह वीर्यं करवावहै तेजस्वि ना अधीतमस्तु मा विद्विषावहै शान्तिः शान्तिः शान्तिः ॥ सावित्राणि० । अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये छन्दोभ्यः ऋषिभ्यः छन्दोभ्यः औपनिषदव्रताय जुष्टं निर्वपामि ॥ शन्नो

मित्रः शँ वरुणः शन्नो अस्त्वर्यमा, शन्न इन्द्रश्चाग्निश्च शन्नो विष्णुरुरुक्रमः । नमो ब्रह्मणे नमो वायवे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्मावादिषमृतमवादिषं सत्यमवादिषं तन्मामावीत्तद्वक्तारमावीदावीन्मामावीद्वक्तारं शान्तिः शान्तिः शान्तिः । सह ना अवतु सह नौ भुनक्तु सह वीर्यं करवावहै तेजस्वि ना अधीतमस्तु मा विद्विषावहै शान्तिः शान्तिः शान्तिः ॥ (इत्यौपनिषद्युत्तरा शान्तिः ॥) विष्णोर्मनसेति सावित्रादिना यथादैवतं प्रोक्षतीत्यन्तम् । शन्नो मित्रः शँ वरुणः शन्नो भवत्वर्यमा० । सावित्राणि । अ० वा० सू० ब्र० प्र० छ० ऋ० छ० औपनिषदव्रताय जुष्टं प्रोक्षामि ॥ शन्नो मित्रः शँ वरुणः शन्नो अस्त्वर्यमा० । पात्राणि च तूष्णीं० । आज्यदर्शनम् ॥ आज्यभागान्ते । रेवतीस्त्वा० इयं दुरुक्ता० मित्रस्य० सुश्रवः० ॥ नमो वाचे० पृथिवी समित्तां अग्निः समिन्धे तामहं समिन्धे सा मा समिद्धा सुषमिद्धा तेजसा वर्चसा यशसा ब्रह्मवर्चसेन समिन्ध्यात् ।

अन्तरिक्षं समित्तां वायुः० । द्यौः समित्तां सूर्यः समिन्धे० ॥ अग्ने व्रतपते इत्युपस्थानम् । अग्ने व्रतपते सम्राडसि व्रतपा असि व्रतभृदसि व्रतपतिरसि व्रतमालभे तत्ते प्रब्रवीमि तच्छकेयं तेनर्ध्यासम् । एवं वायो० । सूर्यव्रत० । उदुत्यमिति दशर्चेन प्रथमेन प्रतीकानुवाकेन स्रुवेण प्रत्यृचमाज्यं जुहुयात् ॥ उदुत्यमित्यादि । १० ऋ० ॥ आयुर्दा० । शन्नो मित्रः० भवत्वर्यमा० । इति पूर्वां शान्तिं पठेत् । उक्तं स्थालीपाकस्य व्रतहोमः तेजोसि ४ ॥ अ० वा० सू० व्र० प्रजापतये छ० ऋ० छ० औपनिषदव्रताय स्वाहा ॥ "पश्चादग्नेर्दर्भेषु० अधीहि भोः सावित्रीत्रिजपपूर्वानौपनिषदव्रतमन्त्रान्मे भवाननुब्रवीतु ॥" ॐभूर्भुवःस्वस्तत्सवि० ३ । यश्छन्दसामिति द्वे वाचयति । यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्योऽध्यमृतात्सम्बभूव । स मेन्द्रो मेधया स्पृणोत्वमृतस्य देव[1] धारणो भूयासम् ॥ १ ॥ शरीरं मे विचक्षणं वाङ्मे मधुमद्दुहे । कर्णाभ्यां भूरि सुश्रुवं ब्रह्मणः कोशो-

---

१ देव धारणो ।

ऽस्मि मेधयापिहितः श्रुतं मे गोपाय ॥ यद्वेदव्रतं तदत्रव्रतं० इत्यादि सर्वं नमो ब्रह्मणे इत्यन्तम् ॥ शन्नो मित्रः शं वरुणः शन्नो अस्त्वर्यमा० इत्युत्तरां शान्तिं पठेत् ॥ ऋतुतिथ्यादितन्त्रसमाप्तिः । विमुच्य ३ नयामि इत्यौपनिषदव्रतम् ॥ १६ ॥

अथ श्रीकामः ॥ अग्निं परिसमुह्य पर्युक्ष्य परिषिच्य० । आदौ पञ्च० । उत्तरतः संस्तीर्णे० सावित्राणि० श्रियै श्रीकाम-देवताभ्यो जुष्टं निर्वपामि । विष्णोर्मनसेति० ॥ एवं प्रोक्षामि । आज्यदर्शनम् । आज्यभागान्ते ॥ ( श्रीकामः श्वेताया गोः सरूपवत्सायाः पुंवत्सायाः पयसि स्थालीपाकं श्रपयित्वा । आवहन्तीति द्वाभ्यां स्थालीपाकस्य जुहुयात् । ) तेजोसि ४ । आवहन्ती वितन्वाना कुर्वाणा वरमात्मनः । वासांसि मम गावश्चान्नपानेन वर्धय, स्वाहा ॥ १ ॥ सुवर्णां हरिणीं लक्ष्मीं धनदामश्वपूजिताम् । ततो मे श्रियमावह लोमशां पशुभिः सह, स्वाहा ॥ २ ॥ असौ

१ अतो । २ ऋग्यजुर्भ्यामाभ्यां द्वे आहुती जुहुयात् । एकामित्येके । ऋग्यजुषान्ते एकस्वाहाकारात् ॥

श्रीरेनमनपगा भवतु । (एनमिति सगोत्रोपपदं नाम ग्राह्यम्)॥ ऋतुतिथ्यादितन्त्रसमाप्तिः विमुच्य ३। नयामि ॥ (अन्येनान्नाद्येन च ब्राह्मणान्भोजयित्वा हुतशेषस्य स्वयं प्राश्नीयात् ॥ ) इति श्रीकामः ॥ २० ॥

अथ यशस्कामः ॥ अग्निं परिसमुह्य पर्युक्ष्य परिषिच्य । आदौ पश्च० । उत्तरतः संस्ती० सावित्राणि० यशसे यशस्कामदेवताभ्यो जुष्टं निर्वपामि० । विष्णोर्मनसेति० सावित्राणि० । एवं प्रोक्षामि । आज्यदर्शनम् । आत्मनो० ॥ आज्यभागान्ते० ॥ (यशस्कामो रोहिण्या गोः सरूपवत्सायाः पुंवत्सायाः पयसि स्थालीपाकं श्रपयित्वा । आ मा यन्त्वित्यष्टाभिः स्थालीपाकस्य जुहुयात् ॥) तेजोसि० ४ ॥ आ मा यन्तु ब्रह्मचारिणः स्वाहा । सं मा यन्तु ब्रह्मचारिणः स्वाहा । तपो यशो यशानि स्वाहा । जनो यशो यशानि स्वाहा । श्रेयान्वसो यशो यशानि स्वाहा । तं त्वा भग प्रविशामि स्वाहा । स मा भग प्रविश स्वाहा । अस्मिन्सह-

स्त्रशाखे विभजाहं त्वयि मृजे स्वाहा ॥ ८ ॥ [1]यथापः [2]प्रवणा यन्ति, यथा मासा अहर्जरम् । एवं मा ब्रह्मचारिणो धातरायन्तु [3]सर्वशः । प्रतिवेशोऽसि, प्र मा भाहि, प्र मा पद्यस्व, नमे ब्रह्मणे ३ ॥ धारणं मेस्त्वऽनिराकरणं, धारयितास्मि कर्णयोः, श्रुतं मे माप्च्योष्ट, माऽमुष्य मेधाच्यऽनिराकरिष्णुर्भवति । (अन्येनान्नेन च ब्राह्मणान्भोजयित्वा हुतशेषस्य स्वयं प्राश्नीयात् ) ॥ असौ अमुकदत्तः यशस्वी भवतु । ऋतुनिथ्यादितन्त्रसमाप्तिः ॥ विमुच्य ३ । नयामि ॥ ( नानयोः पूर्वेद्युः कर्म, न वसनानुमन्त्रणादि, नात्र व्रतादेशः, न व्रतमन्त्रवाचनम् , नापवर्गः । ) इति यशस्कामः ॥ २१ ॥

अथापवर्गे औपनिषदव्रतम् ॥ आदौ पूर्वेद्युः कर्म । परिसमुह्य पर्युक्ष्य । नमो वाचे० । उद्वयन्तमेत्यादित्यस्योपस्थानम् । उष्णीष । त्ररावर्तं वेष्टयित्वा । आयुर्दा० । अग्निं परिमिन्त्र० ३

१ यथाप इति ब्रह्मचारी केवलं पठेत् ॥ २ प्रवतायान्ति । ३ सर्वतः ।

विभूरसि० इत्युपस्थाय एधोसीति समिदाधानम् । तेजोसीत्य-ग्निमनुमन्त्रयते । अपो अद्येत्युपस्थानम् । ततः प्रातः प्रागुदया-दित्यादि सर्वम् । नमो वाचे० । उष्णीषं निवार्य । इयं कन्या अयं वत्सः । अयमादित्यः । इदं क्षीरौदनम् ॥ आयुर्दा० । विमुच्य ३ । इति पूर्वेद्युः कर्म ॥ ७ ॥ अग्निं परिसमुह्य पर्युक्ष्य परिषिच्य ३ । आदौ पञ्च० । उत्तरतः संस्तीर्णे० निर्वपतीत्यन्तं । शन्नो मित्रः शं वरुणः शन्नो भवत्वर्यमा० । सावित्राणि । अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये छन्दोभ्यः ऋषिभ्यः छन्दोभ्यः अपवर्गे औपनिषदव्रताय जुष्टं निर्वपामि ॥ शन्नो मित्रः शं वरुणः शन्नो अस्त्वर्यमा० । विष्णोर्मनसेति० यथादैवतं प्रोक्षति इत्यन्तं । शन्नो मित्रः शं वरुणः शन्नो भवत्वर्यमा० । सावित्राणि । अ० वा० सू० ब्र० प्र० छ० ऋ० छ० अपवर्गे औपनिषदव्रताय जुष्टं प्रोक्षामि । शन्नो मित्रः शं वरुणः शन्नो अस्त्वर्यमा० । पात्राणि० । आज्यदर्शनम्० । आत्मनो० ॥ आज्यभागान्ते । रेवतीस्त्वा० ।

इयन्दुरुक्ता० । मित्रस्य० । सुश्रवः० ॥ नमो वाचे० । मा नो घर्म इत्येकोनत्रिंशतार्गिभरुत्तमेन प्रतीकानुवाकेन स्रुवेण प्रत्यृचमाज्यं जुहुयात् ॥ मानो घर्म इत्यादि २९ ॥ आयुर्दा० । शन्नो मित्रः शं वरुणः शन्नो भवत्वर्यमा० । उक्तं स्थालीपाकस्य व्रतहोमः ॥ तेजोसि० । अ० वा० सू० ब्र० प्र० छ० ऋ० छ० अपवर्गे औपनिषदव्रताय ॥ शन्नो मित्रः शं वरुणः शन्नो अस्त्वर्यमा० । नमो वाचे० । द्यौः समित्तां सूर्यः समिन्धे तामहं समिन्धे सा मा समिद्धा सुषमिद्धा तेजसा वर्चसा यशसा ब्रह्मवर्चसेन समिन्ध्यात् । अन्तरिक्षं समित्तां वायुः० पृथिवी समित्तामग्निः० ॥ सूर्य व्रतपते सम्राडऽसि व्रतपा असि व्रतभृदसि व्रतपतिरसि व्रतमचारिषं तदशकं तत्ते प्रब्रूमस्तन्नो गोपाय । वायो व्रतपते० । अग्ने व्रतपते० व्रतमचारिषं० ॥ "सर्वैः बान्धवैः सहोत्थाय यजमानः पाणौ पुष्पं गृहीत्वा, शुक्रियं रुद्रस्य 'आयुर्दा'० इति पठित्वाग्नौ प्रक्षिपेत् ॥" ऋतुतिथ्यादितन्त्रसमाप्तिः । विमुच्य ३

नयामि ॥ इत्यपवर्गे औपनिषदव्रतम् ॥ २२ ॥

अथ गोदानम् ॥ परिसमुह्य पर्युक्ष्य परिषिच्य । आदौ पञ्च० । न निर्वापः । पृश्न्याः पयोसि० । आज्यदर्शनं । आत्मनो० गोदानदेवताभ्य इदमाज्यमर्पयामि नमः ॥ आज्यभागान्ते । (षोडशे वर्षे गोदानमग्नौ वा समाप्ते तद्व्याख्यातं जटाकर्मणा ।) अयमगात्सविता क्षुरेण उष्णेन वाय उदकेन एहि । आदित्या रुद्रा वसवः सचेतसः सोमस्य राज्ञो वपत प्रचेतसः "इत्युष्णा अपोऽभिमन्त्रयते ॥" उष्णाश्च शीताश्च समेत्य सर्वा बृहस्पतिः सविता सत्यधर्मा तदनुमन्यतामिति ॥ सोमपुत्रस्याध्वरस्य ॥ आर्द्रदानवः स्थ जीवदानवः स्थोन्दतीरिहैनमवताप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे इत्यभ्युन्देत् । ओषधे त्रायस्वेति दर्भमन्तर्धाय ओषधे त्रायस्वैनं स्वधित इतिक्षुरेणाभिनिधाय स्वधिते मैनं हिंसीः ॥ येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्मणो वपतेदमद्याऽऽयुष्माञ्जरद-

ष्टिर्यथासत् ॥ अयमसावमुकदत्तः दक्षिणे केशान्ते । आर्द्रदानव० । येन धाता बृहस्पतिरग्नेरिन्द्रस्य चायुषेऽवपत् । तेनास्यायुषेवप सुश्लोक्याय स्वस्तये अयमसावमुकदेवः पश्चिमे केशान्ते ॥ आर्द्रदानव० । येन पूषा प्रजापतेरग्नेः सूर्यस्य चायुषेऽवपत् । तेनास्यायुषेवप सुश्लोक्याय स्वस्तये । अयमसावमुकशर्मा उत्तरे केशान्ते । आर्द्रदान० । येन भूयश्च रात्रीं ज्योक्पश्याच सूर्यम् । तेनास्यायुषेवप सुश्लोक्याय स्वस्तये । अयमसावमुकस्वामी पूर्वे केशान्ते ॥ इति प्रदक्षिणं प्रतिदिशं प्रतिमंत्रं दर्भक्षुरकर्म यत्क्षुरेण वर्तयता सुपेशसा वप्तर्वपसि केशान् । शुन्धि शिरो मास्यायुःप्रमोषीरिति लोहायसं क्षुरं केशवापाय प्रयच्छति ॥ मा ते केशाननुगात्तेज एतत्तथा धाता दधातु ते । तुभ्यमिन्द्रो बृहस्पतिः सविता वर्च आदधु " रिति प्रपततोऽनुमन्त्रयते ॥ " सुहृत्परिग्राह्यानुप्यमानान्हरितगोमये समवचिनोति । उप्त्वाय राज्ञो वरुणस्य केशान्सोमो धाता सविता विष्णुरग्निः । तेभ्यो

निधानं बहुधान्यविन्दन्नन्तरा द्यावापृथिवी अवस्युरिति प्रागुदीचीं ह्रियमाणाननुमन्त्रयते । अरिक्ते पर्याश्रेषयत इति श्रुतिः ॥

वपननिमित्तं स्नानं कारयित्वा (दर्भेष्वासीनं दर्भानध्यधिकृत्य हिरण्यं[1] चाभिषिञ्चति आग्नेयीभी राजसूयिकीभिर्वा या आपो दिव्या इति द्वाभ्याम् । एवं राजानम् ॥ सावीर्हि देवेतिचानुवाकेनान्यद्यथोक्तमक्रतुज्यानिम्[2] ) ॥ पूर्वं या आपो दिव्या० अभित्वा वर्चसा० सविताकरदित्यन्ताभ्यां द्वाभ्याम् ॥ सावीर्हि देव प्रथमाय पित्रे वर्ष्माणमस्मै वरिमाणमस्मै । अथास्मभ्यं सवितर्वार्याणि दिवे दिव आसुवा भूरि पश्वः ॥ भूतो भूतेषु चरति प्रविष्टस्स भूतानामधिपतिर्बभूव । तस्य मृत्योश्चरति राजसूयं स राजा राज्यमनुमन्यतामिदम् ॥ येभिःशिल्पैः पप्रथानामदृंहद्येभिर्द्या-

---

१ ब्रह्मचारिणः शिरसि दर्भास्तदुपरि सुवर्णं च निधायेत्यर्थः ॥ प्रसन्नाद्याभिः षड्विधाभिरद्भिर्ब्रह्मचारिणमभिषिञ्चति । नतुक्षीरोदकेन ॥

२ क्रतुमृत्युसवः, ज्यानिरर्थत्यागादिकृत आयासस्तद्वर्जम् ॥

मभ्यपिंशत्प्रजापतिः । येभिर्वाचं विश्वरूपेभिरव्ययंस्तेनेममग्न इह वर्चसा समङ्ग्धि ॥ येभिरादित्यस्तपति प्रकेतुभिर्येभिः सूर्यो ददृशे चित्रभानुः । येभिर्वाचं पुष्कलेभिरव्ययंस्तेनेममग्न इह वर्चसा समङ्ग्धि ॥ आयरुभातु शवसा पञ्च कृष्टीरिन्द्र इव ज्येष्ठो भवतु प्रजानाम् । अस्मिन्नस्तु पुष्कलं चित्रभान्वायं पृणातु रजसो विमानम् ॥ यत्ते शिल्पं कश्यप रोचनावदिन्द्रियावत्पुष्कलं चित्रभानु । यस्मिन्सूर्या अर्पिताः सप्त साकं तस्मिन् राजानमधि विश्रयेमम् ॥ व्याघ्रो वैयाघ्रे अधिविक्रमस्व दिशो महीः, विशस्त्वा सर्वा वाञ्छन्त्वापो दिव्याः पयस्वतीः । या आपो दिव्याः पयसा सम्बभूवुर्या अन्तरिक्ष्या उत पार्थिवासः । तासां त्वा सर्वासां रुचाभिषिञ्चामि वर्चसा, अभि त्वा वर्चसा सृजं यज्ञेन पयसा सह, यथासो मित्रवर्धनस्तथा त्वा सविता करत् ॥ इन्द्रं विश्वा अवीवृधत्समुद्रव्यचसङ्गिरः, रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥ अभिप्रेहि वीरयस्वोग्रश्चेत्ता सपत्नहा ।

आतिष्ठ मित्रवर्धन स्तुभ्यन्देवा अधिब्रुवन् ॥ आतिष्ठ वृत्रहन्रथं युक्ताते ब्रह्मणा हरी । अर्वाचीनं सुते मनो ग्रावा कृणोतु वग्नुना ॥ आतिष्ठन्तं परि विश्वे अभूषञ्छ्रियो वसानश्चरति स्वरोचिः । महत्तदस्यासुरस्य नाम विश्वरूपो अमृतानि तस्थौ ॥ अनु त्वेन्द्रो मदत्वनु बृहस्पतिरनु सोमो अन्वग्निरावीत् । अनु त्वा विश्वे अवन्तु देवाः सप्तराजानो यउदाभिषिक्ताः ॥ अनु त्वा मित्रा वरुणा इहावतामनुद्यावापृथिवी ओषधीभिः । सूर्योऽहोभिरनु त्वावतु चन्द्रमा नक्षत्रैरनु त्वावीत् ॥ द्यौश्च त्वा पृथिवी च प्रचेतसा यज्ञो बृहद्दक्षिणा त्वा पिपर्तु । अनु स्वधा चिकिते सोमो अग्निरन्तु त्वावतु सविता सवेन ॥ एना व्याघ्रं परिषस्वजानं सिंहं हिन्वन्ति महते धनाय । मर्मृज्यन्ते द्वीपिनमप्स्वन्तररुषन्न सुत्वं[1]स्तस्थिवांसम् ॥

तेजोसि० । ये के च ज्मेत्याज्यप्रधानम् । ऋतुतिथ्यादितन्त्रस-

---

१ सुभ्व इत्यपि पाठः ।

मादिः विमुञ्चामि ३ । नयामि ॥ नात्र वसनानुमन्त्रणादि व्रातिकं किञ्चित् । नचास्यापवर्गः ॥ इति गोदानम् ॥ २३ ॥

अथापवर्गे त्रैविद्यकम् ॥ अग्निं परिसमुह्य पर्युक्ष्य परिषिच्य । आदौ पञ्च० । न निर्वापः । पृश्न्याः पयोसि० । आत्मनो० । छन्दोभ्यः अपवर्गे त्रैविद्यकाय इदमाज्यमर्पयामि नमः । आज्यभागान्ते । रेवतीस्त्वा० । इयन्दुरुक्ता० । मितस्य० । सुश्रवः० । आज्यप्रधानं तेजोसि० । ये के च उमा० । छन्दोभ्यः स्वाहा । अपवर्गे त्रैविद्यकाय स्वाहा ॥ "प्रधानानन्तरं समिदाधानम्" ॥ यद्देवा देवहेळनं देवासश्चकृमा वयम् । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥ यदि दिवा यदि नक्तमेनांसि चकृमा वयम् । वायुर्मा० ॥ यदि जाग्रद्यदि स्वप्न एनांसि चकृमा वयम् । सूर्यो मा० ॥ "उपस्थानम्" अग्ने व्रतपते व्रतमचारिषं तदशकं तत्ते [1]प्रब्रूमस्तन्नो गोपाय ॥ वायो० । सूर्य० ॥ ऋतुति-

---

१ प्रब्रवीमि ।

ष्यादि० । सावित्राणीत्यन्तं ॥ नात्र व्रतादेशः । न त्रैविद्यक व्रतम-
नुवाचनम् ॥ सर्वेषां बान्धवानां नैवेद्यम् । अमृतेश-
मुद्रया अमृतीकृत्य । अमृतमस्तु अमृतायतां नैवेद्यं, सावित्राणि
सावित्रस्य देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ता-
भ्यामाददे । महागणपतये० इत्यादि । प्रजापतये सीमन्तकरण-
देवताभ्यः अग्नये इन्द्राय विष्णवे पुंसवनदेवताभ्यः जातकरण-
देवताभ्यः काय प्रजापतये नामकरणदेवताभ्यः मित्राय सोमाय
अन्नपतये चूडाकरणदेवताभ्यः मेधायै सरस्वत्यै छन्दोभ्यः उपा-
यनदेवताभ्यः छन्दोभ्यः त्रैविद्यकव्रतदेवताभ्यः उपाकरणदेवता-
भ्यः छन्दोभ्यः चातुर्होतृकदेवताभ्यः छन्दोभ्यः अपवर्गे चातुर्हो-
तृकव्रतदेवताभ्यः ब्रह्मणे प्रजापतये घर्माय सम्राजे सूर्याय विभ्राजे
देवेभ्योघर्मपेभ्यः पितृभ्योघर्मपेभ्यः छन्दोभ्यः प्रवर्ग्यव्रतदेवताभ्यः
ब्र० प्र० घ० सू० दे० पि० छ० अपवर्गे प्रवर्ग्यव्रतदेवताभ्यः । अ०
वा० सू० ब्र० प्र० सं० ऋतुभ्यः अरुणेभ्यः काण्वर्षिभ्यः छ० अरु-

णव्रतदेवताभ्यः । अ० वा० सू० ब्र० प्र० सं० ऋ० अ० छ० अपवर्गेऽरुणव्रतदेवताभ्यः । अ० वा० सू० ब्र० प्र० छ० ऋषिभ्यः छ० औपनिषदव्रताय । श्रियै श्रीकामदेवताभ्यः । यशसे यशस्कामदेवताभ्यः । अ० वा० सू० ब्र० प्र० छ० ऋषिभ्यः छ० अपवर्गे औपनिषद्व्रतदेवताभ्यः । गोदानव्रतदेवताभ्यः । छ० अपवर्गे त्रैविद्यकव्रतदेवताभ्यः । स्नातकव्रतदेवताभ्यः त्रिकाहोमदेवता० । भगवते वासुदेवाय० विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै० इन्द्राय वज्रहस्ताय० हेरुकादिभ्यो वटुकादिभ्यः ॥ उत्पन्नममृतं दिव्यं प्राक्क्षीरोदधिमन्थनात् । अन्नममृतरूपेण नैवेद्यं प्रतिगृह्यताम् ॥ मुक्ताविद्रुम० । अद्य तावत् । सुतस्य मौञ्जीबन्धननिमित्तं ओंनमो नैवेद्यं निवेदयामि नमः ॥ इळामग्ने० इत्यादि पूर्णान्तं । पूर्णादौ ब्राह्मणपूजनम् ॥ गायत्र्यै नमः ओंभूर्भुवःस्वः३ अद्य तावत् अग्नेर्यविष्ठस्य सानुचरस्य आदित्यस्य अध्वर्योः ब्रह्मविष्णुमहेश्वरदेवतानां आत्मनो० सुतस्य मौञ्जीबन्धननिमित्तं

अर्चामहं करिष्ये ओंकुरुष्व ॥ यवान्विकीर्य । अग्नेर्यविष्ठाय सानु-चराय आदित्याय अध्वर्यवे ब्रह्मविष्णुमहेश्वरदेवताभ्यः समाल-भनं गन्धादि दक्षिणान्तं । दक्षिणां च दत्त्वा । एता देवताः । गायत्र्यै नमः २ अद्य तावत् । अग्नेर्यविष्ठस्य० आत्मनो० सुतस्य मौञ्जीबन्धननिमित्तं पूजनमच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ एताभ्यो देवताभ्यो यवोदकं नमः० ॥ सर्वै बान्धवैःसह आश्रावितमिति पूर्णां दत्त्वा त्र्यायुषं० अग्नौ दण्डं प्रास्येदप्सु मेखलां वासश्च । विमुच्य नयामि ॥ पुनरग्निं परिसमुह्य पर्युक्ष्य । इत्यपवर्गं लै-विद्यकम् ॥ २४ ॥

उष्णीषं, वस्त्रद्वयं नवीनं, अलङ्करणादि च, स्नातकं परिधापयेत् ॥ (ब्रह्मचारी आचार्यं मधुपर्केण पूजयेत्) अथ स्नानव्रतमन्त्राः ॥ छन्द-स्यऽर्थान्बुद्ध्वा स्नास्यन् गां कारयेदाचार्यमर्हयेत् । यथा षडर्घ्यार्हा भवन्ति आचार्य ऋत्विक् राजा विवाह्यः प्रियः स्नातक इत्यऽथैनम-र्हयन्ति । आदौ च कर्मणोऽर्घ्यमुदकं सौषधं दर्भा इति, कंसे चमसे वा

दध्यासिच्य मधु च, वर्षीयसा पिधाय, विष्टराभ्यां परिगृह्य, पाद्य-प्रथमैः प्रतिपद्यन्ते ॥ मयि दोहोसि विराजो दोहः पद्यायै विराजो दोहमशीयेत्याह्रियमाणमनुमन्त्रयते ॥ "भगवन् विष्टरो विष्टरो विष्टरः" भगवतः (आचार्यस्य वा) ब्रह्मचारिणः इदमासनम् ॥ आस्यतां। विष्टरोसि मातरि सीदेति विष्टरमास्तीर्य तस्मिन्नुपविशति। विष्टर आसीनायैकैकं त्रिः प्राह ॥ पाद्यं ३ अर्घ्यं ३ मधुपर्कः ३ आचमनीयं ३ नैव [1]भोरित्याह, न मार्षेति ॥ शन्नो देवी०, रित्यपोऽभिमन्त्र्य पाद्याभिः प्रक्षालयते ॥ लाजाश्च० ॥ भगवन्पाद्यं २ ॥ ओं भगवन्पाद्यं ददानि ते ३। ओं भगवन् पाद्यं प्रतिगृह्णामि ३। पाद्यपात्रे गृहीते सति तद्दक्षिणेन पाणिनादाय सव्ये पाणौ निधाय स्वयं पादाववनेनिज्यात्। दक्षिणं पादमवनेनिज, इदमहमस्मिन्कुले ब्रह्मवर्चसं ददामि। उत्तरं पादमवनेनिज, इदमहं मां मयि तेजो वीर्यमन्नाद्यं प्रजां

---

१ भोरिति सामान्यसम्बोधनं–मार्षेति नामसम्बोधनं चनात्र कर्तव्यम् केवलं भगवन्निति पूज्यसम्मान वचनं ब्रूयात् ॥

पशून् ब्रह्मवर्चसं ददामि ॥ आपो हिष्ठीयाभिरर्घ्यं परिगृह्य सावित्रेण मधुपर्कम् ॥ शन्नो देवी० । आपः क्षीरं० । भगवन्नर्घ्यं २ ॥ भगवन्नर्घ्यं ददानि ते ३. पाद्यपात्रवदर्घ्यपात्रमादाय । ॐ भगवन्नर्घ्यं प्रतिगृह्णामि ३ ॥ इति त्रिरुक्त्वा प्रतिग्रहीता आपो हिष्ठेति तिसृभिः शिरसि कुशपवित्रेणापः क्षिपेत् ॥ पवित्रं निवार्य । (आचार्याय वा) ब्रह्मचारिणे गन्धादि० । अर्घ्यदानाद्यर्चनविधिः सर्वः परिपूर्णोऽस्तु । अन्नं नमः २ । इत्युक्त्वा ॥ सावित्राणीति मधुपर्कः ॥ "मधुपर्कं विदुस्त्र्यङ्गं याज्ञिका यज्ञकर्मणि । माक्षिकं च घृतं चैव सुजातं शोभनं दधि" ॥ भगवन्मधुपर्को मधुपर्को मधुपर्कः । ॐभगवन्मधुपर्कं ददानि ते ३ इति त्रिरुच्चार्य दाता । सावित्राणि० । भगवन्मधुपर्कं प्रतिगृह्णामि ३ इति त्रिरुच्चार्याञ्जलिनादाय सव्ये पाणौ निधाय ग्रहीता विष्टरोऽस्यन्तरिक्षमधि विश्रयस्वेति वर्षिष्ठपात्रस्योपरिस्थितं विष्टरमुत्क्षिपेत् । विष्टरमवकृष्य । उरुत्वेत्यवसार्य उरुत्वा वाताय० । तच्चक्षुरित्यवेक्ष्य तच्चक्षुर्देवहितं० ॥ पृथिव्यास्त्वा नाभौ साधयाम्यऽ-

नेन विष्टरेऽधःस्थिते भूमौ निधाय । मधुवाता इति तिसृभिः प्रदेशिन्याऽऽलोडयति॥मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः माध्वीर्नः सन्त्वोषधीः । मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः मधु द्यौरस्तु नः पिता । मधुमान्नोवनस्पति र्मधुमाँ अस्तु सूर्यः माध्वीर्गावो भवन्तु नः ॥ वसवस्त्वाऽग्निराजानो भक्षयन्तु, पितरस्त्वा यमरा०, रुद्रास्त्वा सोमरा०, आदित्यास्त्वा वरुणरा०, विश्वे त्वा देवा बृहस्पतिराजानो० ॥ इति प्रदक्षिणं प्रतिदिशं प्रतिमंत्रं पात्रस्यान्तेषु लेपान्निर्मार्ष्टि॥ यन्मधुन इति च। यन्मधुनो मधव्यस्य परमस्यान्नाद्यस्य परममन्नाद्यं रूपं तेनाहं मधुनो मधव्यस्य परमस्यान्नाद्यस्य परमोऽन्नादो मधव्यो भूयासं त्रय्यै विद्यायै यशोसि श्रियै यशोसि यशसे ब्रह्मणो दीप्तिरसि इति। सत्यश्रीः, यशःश्रीः, मयिश्रीः, श्रीः श्रयतामिति मधुपर्कस्य चतुष्प्राश्नाति अङ्गुष्ठाद्द्वितीयाभिः कनिष्ठया प्रथममेवमनुपूर्वं सर्वाभिस्तदवशिष्टं सुहृदे प्रयच्छति । भगवन्नाचमनीयं ३ त्रिरित्युक्ते आचार्याय वा ब्रह्मचारिणे आचमनीयं नमः । अ-

मृतोपस्तरणमसि स्वाहेत्यप आचामयेत् ॥ आचार्याय वा ब्रह्मचारिणे दक्षिणा ॥ [1]तस्मा असिपाणिर्गां प्राह । तां शास्ति । मम चामुष्यच पाप्मानं जहि, हतो मे पाप्मा, पाप्मानं मे हत ओंकुरुतेति, चतुरो नानागोत्रान्ब्राह्मणान्भोजयेत् । एष आद्योपायो, यद्युत्सृजेत् [2]माता रुद्राणामिति जपेत् माता रुद्राणां दुहिता वसूनां स्वसाऽऽदित्यानाममृतस्य नाभिः । प्रनुवोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥ सूयवसाद्भगवती हि भूयाअथो वयं भगवंतः स्याम । अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती । ओं ३ उत्सृजत तृणान्यत्त्वित्युक्त्वा तामुत्सृष्टां पशुमङ्गंवा,

(१ वेदाचार्य एवोक्त विधिना ब्रह्मचारिणं मधुपर्कादिना पूजयेत्तदा पूजाङ्गभूता दक्षिणापि किंचिन्मात्रा देया आचार्यमर्हयेदित्युक्त्या चाचार्यकृतार्चास्वीकारानन्तरं ब्रह्मचारिणापि स दक्षिणाभिरर्हणीयः ॥ )

२ देवपालकृतभाष्ये–निश्चितेऽपि यदिशब्दो दृष्टः ‘ यदि वेदाः प्रमाणम् ’ इति यथा । उक्तामितिकर्तव्यतां विधाय गामुत्सृजेत् एव न हन्यादित्यर्थः मातारुद्राणामितिचपठेत्

नामांसो मधुपर्कः स्यादिति ह विज्ञायते अपिवा घृतौदन एव स्यात्॥ मधुपर्के च यज्ञे च पितृदैवतकर्मणि। अत्रैव पशवो हिंस्या नान्यत्र मनुरब्रवीत्। इति मधुपर्कविधिः॥ श्रोत्रियोऽन्यो वेदाध्यायी, न तस्य स्नानम्, अथास्य स्नानं व्रजपरिहितं प्रपाद्य जटाश्मश्रुलोमनखमभिसंहार्य, "आपो हिष्ठा० ३" इति तिसृभिः स्नायात्। हिरण्यवर्णाः इति च द्वाभ्याम्। हिरण्यवर्णाः०।१। हिरण्यवर्णाः शुचयः पावका विचक्रमुर्हित्वावद्यमापः। शतं पवित्रा वितता ह्यासां ताभिर्मा देवः सविता पुनातु ॥ २ ॥ शन्न इति च द्वाभ्याम् शन्न आपो धन्वन्याः०, ॥ ३ ॥ आपो अस्मान्मातरः० ॥ ४॥ द्यौस्ते इति छत्रं धारयेत्। द्यौस्ते पृष्ठं पृथिवी सधःस्थमात्मान्तरिक्षं समुद्रो योनिः। विख्याय चक्षुषा त्वमभितिष्ठ पृतन्यतः। इममग्न इति हिरण्यं बध्नीयात्॥ गृत्समदस्य भार्गवस्य। इममग्नआयुषे० ॥ प्रतिष्ठे इति वाराह्युपानहौ[1] प्रतिमुञ्चेत्। प्रतिष्ठे स्थो देवते मा मा हिंसिष्टम् इति। द्विवस्त्रोऽत ऊ-

[1] वाराह्योपानहौ। वाराही उपानहौ इति वा ॥

ध्वम् । तस्माच्छोभनं वासो भर्तव्यमिति श्रुतिः । ततो ब्रह्मचारी बाढमिति प्रत्याह ॥ वैणवदण्डधारी स्याः नित्यं, छत्रधारी स्याः, अपन्थदायी स्याः, अदत्तहरणं प्रतिषिद्धम्, अपरया द्वारा निःसरणं प्रतिषिद्धम्, मलवद्वाससा सह संभाषा प्रतिषिद्धा, रजोवाससा सह शय्या प्र०, गुरोर्दुरुक्तवचनं प्रतिषिद्धम्, अस्थाने स्वपनं प्र०, सरणं प्र०, गायनं प्र०, नर्तनं प्र०, तस्य चेक्षणं प्रति०, ॥ वेदमनूच्यैकादशानुवाकेनानुशास्ति । (वेदमनूच्याचार्यो ब्रह्मचारिणमन्तेवासिनमनुशास्ति)। सत्यं वद, धर्मं चर, स्वाध्यायान्मा प्रमद, आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः, सत्यान्न प्रमदितव्यम, धर्मान्न प्र०, यत्नान्न प्र०, कुशलान्न प्र०, स्वाध्यायप्रवचनाभ्यां न प्र०, यज्ञाद्देवपितृकार्येभ्यो न प्र०, मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव, अतिथिदेवो भव, यान्यनवद्यानि कर्माणि तानि त्वया कर्तव्यानि नो इतराणि । अथ यान्यस्माकं सुचरितानि तानि त्वया कर्तव्यानि नो इतराणि । अथ ये केचनास्मच्छ्रेयांसो ब्राह्मणा आगच्छे-

रंस्तेषां त्वयाऽऽसनेन प्रश्वसितव्यम्, श्रद्धया देयमश्रद्धया देयं, संविदा देयमसंविदा देयं, ह्रियादेयं भिया देयं वित्त्यै देयमवित्त्यै देयं भूत्यै देयमभूत्यै देयम्॥ अथ यदि ते कर्मविचिकित्सा वृत्तिविचिकित्सा वा स्यात्॥ ये तत्र ब्राह्मणाः सम्मर्शिनो युक्ता आयुक्ता रूक्षा अरूक्षा लुब्धा अलुब्धा धर्मकामा वा स्युः, यथा ते तत्र वर्तेरंस्तथा त्वं तेषु वर्तेथाः, अथाभ्याख्याता स्तेषु ये तत्र ब्राह्मणाः संमर्शिनो युक्ता आयुक्ता रूक्षा अरूक्षा लुब्धा अलुब्धा धर्मकामा वा स्यु र्यथा ते तत्र वर्तेरन् तथा त्वं तत्र वर्तेथाः॥ एष आदेशः, एष उपदेशः, एषा वेदोपनिषदेतदनुशासनमेवमेवैतदुपास्यम्॥ अथातोष्टाचत्वारिंशत्संमितम्। तत्र विधिविशेषः। नियमेष्वचार्यप्रधानः स्यात्। १। निलयार्थी यूनबद्धं न प्रविशेत्। २। अनिलयः स्यात्। ३। अन्यत्र वृक्षाद्वल्मीकाद्वा। ४। निस्तान्तवमित्येके। यथोक्तमेकं तु वासः शाणी चीरं कुतपं वा। ५। परिमितमुरःप्रमाणमुपरि जानु। ६। चतुर्थकालपानभक्षः। ७। असञ्चयवान्। ८। अहरहर्वा भैक्षमश्नीयात्। ९। अह-

स्तिष्ठेत् । १० । रात्रावासीत । ११ । उभयं मुनिव्रतः स्यात् । १२ । स्त्री-शूद्रपतितरभसरजस्वलैर्वा न सम्भाषेतेतिच्यवनोभृगुः । १३ । द्वाद-शरात्रं वोभयतः । १४ । अमावस्यां पौर्णमासीं च । १५ । पालाश्यः समिधो नित्याः । १६ । परिधिवृक्षाणां वा । १७ । मेधां मह्यमिति पाणिना मार्गं दत्वा त्रिषवणमहोरात्रमुदकोपस्पर्शनम् । १८ । नमो ह्माय मोह्मायेति चानुसवनम् । अग्नये वैश्वानराय तपाय ताप-साय तपन्ताय विन्दवे विन्दाय वसुविन्दाय सर्वविन्दाय नमः पा-राय सुपाराय पारयन्ताय शान्ताय नम ऊर्म्याय नमः सूर्म्याय नम-श्च्यवनाय भार्गवाय इत्येता एव देवतास्तर्पयन्नुदकेन । १९ । एष संवत्सरं चरित्वा विमलो विपापो भवति । २० । सर्वेषां वेदानां च-रितब्रह्मचर्यो यदि नान्यत्कुरुते । २१ । स तु खलु चरितब्रह्मचर्यो दश दश पुरुषान्पुनाति पूर्वापरानात्मानं चैकविंशम् । २२ । पंक्तिं च यावदनुपश्यति यस्यामुपविशति । २३ । समाप्त एतासामेव देवता-नामन्नस्य जुहोति । धेनुर्दक्षिणा । २४ । इति शिक्षाः ॥ पुनस्तीर्थं ग-

च्छेत् प्राचीमुदीचीं वा तत्र मंत्राः॥ ये ते पन्थानः सवितः पूर्व्यासो रेणवो वितता अन्तरिक्षे। तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव॥ नमोऽग्नये पृथिवीक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि, नमो वायवेऽन्तरिक्षक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि, नम आदित्याय दिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि॥ नदीतीरं गत्वा सन्ध्योपासनं कुर्यात्॥ ततो नदीतीरादागत्य स्वस्तिपुण्यत्वाद्धोमस्य चानाम्नातत्वात्त्रिकादिभिर्होमः।

तत्रायं विधिः। परिसमुह्य पर्युक्ष्य परिषिच्य। चतुष्कोष्ठैः स्तरैः परिस्तीर्य। यज्ञस्य सन्तति०। ४॥ आज्यं संस्कृत्य, प्रश्न्याः पयोऽसि० इत्यादिभिर्यजुषे यजुष इत्यन्तं सम्पाद्य हविरसीति० आज्यदर्शनम्। आत्मनो० त्रिकाहोमदेवताभ्यः इदमाज्यं०। अभ्युदय पवित्रमग्नौ०। स्रुवं प्रतितापय, यैः कैश्चिद्दर्भाग्रैः स्रुवं संमृज्य होमः॥ (वामहस्ते दर्भकाण्डचतुष्टयमुपयामार्थं धार्यम्) तव श्रिये इति पञ्चविंशति-

माज्याहुतीर्जुहुयात् स्रुवेण ॥

तव श्रिये व्यजिहीत पर्वतो गवां गोत्रमुदसृजो यदङ्गिरः ।
इन्द्रेण युजा तमसा परीवृतं बृहस्पते निरपामौब्जो अर्णवम् ॥१॥
बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दी-
दयच्छवसर्तप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ २॥ बृह-
स्पतिः समजयद्वसूनि महोव्रजान्गोमतो देव एषः । अपः सि-
षासन्त्स्वरप्रतीतो बृहस्पतिर्हन्त्यमित्रमर्कैः ॥ ३ ॥ यमो दाधार
पृथिवीं व्यमो द्यामुत सूर्यम् । यमाय सर्वमित्तस्थे यत्प्राण-
द्वायुरक्षितम् ॥ ४ ॥ यथा पञ्च यथा षड्यथा पञ्च दशर्षयः । यमं
यो विद्यात्स ब्रूयाद्यथैकर्षिर्विजानते ॥ ५ ॥

त्रिकद्रुकेभिः पतति षडुर्वीरेकमिद्बृहत् । गायत्री त्रिष्टुप्छन्दाँसि
सर्वा ता यम आहिता ॥ ६ ॥ मृळा नो रुद्रोत नो मयस्कृधि
क्षयद्वीराय नमसा विधेम ते । यच्छं च योश्च मनुरायेजे पिता
तदश्याम तव रुद्र प्रणीतिषु ॥ ७॥ अश्याम ते सुमतिं देव-

यज्यया त्वयद्वीरस्य तव रुद्र मीढ्वः । सुम्ना यन्निद्विशो अस्माकमा चरारिष्टवीरा जुहवाम ते हविः ॥ ७ ॥ त्वेषं वयँ रुद्रं यज्ञसाधनं वङ्कुं कविमवसे नि ह्वयामहे । आरे अस्मद्दैव्यं हेळो अस्यतु सुमतिमिद्वयमस्या वृणीमहे ॥ ९ ॥ अव ते हेळो० ॥१०॥ उदुत्तमं वरुण० ॥ ११ ॥ इमं मे वरुण० ॥ १२ ॥ तत्त्वायामि० ॥ १३ ॥ ओंभूर्लोकाय स्वाहा ॥१४॥ ओंभुवर्लोकाय स्वाहा ॥ १५ ॥ ओंस्वर्लोकाय स्वाहा ॥ १६ ॥ ओंभूर्भुवः स्वर्लोकाय स्वाहा ॥ १७ ॥ अग्निर्मूर्धा० ॥ १८ ॥ उभा वामिन्द्राग्नी० ॥ १९ ॥ अयमिह० ॥२०॥ अयं ते योनि० ॥ २१ ॥ स्तोमो देवानां । उपप्रयन्तो० ॥ २२ ॥ अस्य प्रत्ना० ॥ २३ ॥ अरुणेः । कदाचनस्तरी० ॥२४॥ आज्यदर्शनस्य अक्षोटेन सहिताहुतिः । परि ते दूळभो० ॥ २५ ॥ विमुच्य ३ । नयामि । इति त्रिकाहोमाः ॥ ब्रह्मचर्यात्समावृत्तं पिता पुत्रं मधुपर्केणार्हयेत् तदुक्तं । तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः । स्रग्विणं तल्पआसीनमर्हयेत्प्रथमं गवा ॥ स्नातकेति नाम्ना

पिता पुत्रं गन्ध पुष्प पाद्यार्घ्यादिना मधुपर्केण चार्हयेत् ॥ (१४६ पृष्ठे द्रष्टव्यम्) ॥ अथ यजमानः पुनरग्निं परिसमुह्य पर्युक्ष्य परिषिच्य परिस्तीर्य ४ स्तरैः वैश्वदेवं विदध्यात् । वैश्वदेवस्य सिद्धस्य० आदावग्नये स्वाहेत्युत्तरतः इत्यादि० । नैवेद्यम्० । पूर्वाग्रान्दर्भानास्तीर्य, नक्षायनमः इत्यादि० ॥ अपसव्येन दक्षिणाग्रान्दर्भानास्तीर्य, समस्तमाता पितृभ्योऽन्नम् ॥ गन्धादि च० सर्वं हिमपानादि० ॥ सव्येन । वसन्ताय नमः० इत्यादि ॥ ज्वालालिङ्ग स्रुक् स्रुवाणामच्छिद्रम् ॥ (पृष्ठे २५ द्रष्टव्यम्) ॥ अग्नये स्विष्टकृते स्वाहा ॥ प्राणायामः ॥ विमुच्य० ३ ॥ नयामि ॥ क्षमापुष्पाणि — क्षमस्व देवदेवेश देवाधिष्ठित विग्रह । पुत्र पौत्रादिकं सौख्यं देहि मे हव्यवाहन ॥ १ ॥ राज्यं देहि धनं देहि पुत्रान्कामांश्च देहि मे । आयुरारोग्यं मे देहि भगवन् हव्यवाहन ॥ २ ॥ देहि पुत्रं तथा पौत्रं देहि मे मत्त कुञ्जरान् । सुखं सौभाग्यं मे देहि भगवन् हव्यवाहन ॥३॥

नित्योत्सवकरो भूया नित्यानन्दं च देहि मे । गोपशुवृद्धिं मे देहि भगवन् हव्यवाहन ॥ ४ ॥ बुद्धिं कीर्तिं यशो देहि भोगं च विभवं तथा । देहि कुटुम्बकुशलं भगवन् हव्यवाहन ॥५॥ जयं देहि श्रियं देहि सुखं देहि सुमन्त्रितम् । आयुरारोग्यं मे देहि भगवन् हव्यवाहन ॥ ६ ॥ सर्वलक्षणसम्पूर्णः सर्वदेवनमस्कृतः । प्रसन्नो भव मे देव यज्ञेऽस्मिन्हव्यवाहन ॥ ७ ॥ सप्तजन्मकृतं पापं वाङ्मनःकायकर्मजम् । सर्वं तद्विलयं यातु प्रसादं कुरु सर्वदा ॥ ८ ॥ अद्य मे सफलं जन्म तथा मे सफलं तपः । अद्य मे सफलं ज्ञानं धनञ्जयप्रसादनात् ॥ ९ ॥ धनं गणं देहि पुनीहि चित्तं लुनीहि पापेन्धनसञ्चयं च । अकारणाद्वैरपराननार्याञ्छत्रून्समस्ताञ्जहि जातवेदः ॥ १० ॥ राज्ञां शिवं चास्तु तथा प्रजानां गवां शिवं चास्तु तथा द्विजानाम् । आतङ्कहीनं जगदस्तु सर्वं दोषाः समस्ताः प्रलयं प्रयान्तु ॥११॥ धर्मं देहि धनं देहि पुत्रपौत्रांश्च देहि मे । आयुरारोग्यं मे

देहि देहि मे हव्यवाहन ॥ १२ ॥ भक्तिं देहि श्रियं देहि सुखं देहि शुभं तथा । देहि भोगं च मोक्षं च मनोभिलषितं मम ॥१३॥ हव्यं वहसि वह्ने त्वं कव्यं वहसि पावक । मह्यं धनायुरारोग्यं दत्त्वा गच्छ हुताशन ॥ १४ ॥ देहि पुत्रांस्तथा पौत्रान्देहि लक्ष्मीं च पुष्कलाम् । भक्तिं देहि श्रियं देहि सुखं देहि स्वतन्त्रताम् ॥ १५ ॥ गच्छ गच्छ सुरश्रेष्ठ० ॥ १६ ॥ तेजोसि तेजो मयि धेहि इत्यात्मानं धेहि ॥ भगवन् यक्ष्म० ॥ कण्ठोपवीती हन्तमनुष्येभ्यः० ॥ सव्येन या काचिद्योगिनी० ॥ सौरभेयाः स्वर्गहिताः० इत्यादि गोग्रासादि सर्वम् ॥ ये विश्वभाविनो भूताः० इत्यादिना क्षेत्रेशबलिः ॥ अपसव्येन आयुः प्रजां धनं० ॥ ततः कलशस्य विसर्जनं पूर्ववत् ॥ सव्येन॥ गायत्र्यै नमः ओं भूर्भुवः स्वस्तत्सवितु० ३ ॥ तत्सदद्य० । महागणपतेः ० प्रजापतेः सीमन्तकरणदेवतानां, अग्नेरिन्द्रस्य विष्णोः पुंसवनदेवतानां, जातकरणदेवतानां, कस्य प्रजापतेः नामकरणदेवतानां, मित्रस्य,

सोमस्य, अन्नपतेः, चूडाकरणदेवतानां, मेधायाः सरस्वत्याः
छन्दसां उपायनदेवतानां, छन्दसां त्रैविद्यकव्रतदेवतानां, उपा-
करणव्रतदेवतानां, छन्दसां चातुर्होतृकव्रतदेवतानां, छन्दसां
अपवर्गे चातुर्होतृकव्रतदेवतानां, ब्रह्मणः प्रजापतेः घर्मस्य स-
म्राजः सूर्यस्य विभ्राजः देवानां घर्मपाणां पितॄणां घर्मपाणां
छन्दसां प्रवर्ग्यव्रतदेवतानां, ब्रह्मणः प्रजापतेः धर्मस्य सम्राजः
सूर्यस्य विभ्राजः देवानां घर्मपाणां पितॄणां घर्मपाणां छन्दसां
अपवर्गे प्रवर्ग्यव्रतदेवतानां, अग्नेः वायोः सूर्यस्य ब्रह्मणः प्रजा-
पतेः संवत्सरस्य ऋतूनां अरुणानां काण्वर्षीणां छन्दसां अरुण
व्रतदेवतानां, अग्नेः वायोः सूर्यस्य ब्रह्मणः प्रजापतेः संवत्सरस्य
ऋतूनां अरुणानां काण्वर्षीणां छन्दसां अपवर्गे अरुणव्रतदेव-
तानां, अग्नेः वायोः सूर्यस्य ब्रह्मणः प्रजापतेः छन्दसां ऋषीणां छन्द-
सां औपनिषदव्रतदेवतानां, श्रियः श्रीकामदेवतानां, यशसः यश-
स्कामदेवतानां, अग्नेः वायोः सूर्यस्य ब्रह्मणः प्रजापतेः छन्दसां ऋषी-

णां छन्दसां अपवर्गे औपनिषदव्रतदेवतानां, गोदानव्रतदेवतानां, छन्दसां अपवर्गे त्रैविद्यकव्रतदेवतानां, स्नातकव्रतदेवतानां, त्रिकाहोमदेवतानां, वासुदेवादीनां, विष्णुपञ्चायतन देवतानां अभयङ्करीदेव्याः क्षेमङ्करी० सर्वशत्रु० इहराष्ट्राधिपतेः भैरवस्य, इन्द्रस्य वज्रहस्तस्य इत्यादि सर्वं पूर्ववत् अग्नेः वायोः सूर्यस्य ब्रह्मणः इन्द्रस्य प्रजापतेः भवस्य शर्वस्य ईशानस्य ईश्वरस्य विष्णोः बृहस्पतेः यजुर्वेदस्य छन्दसां ऋषीणां वेदानां ब्राह्मणानां सोमानां सोमपानां आचार्याणां विंशतिऋषीणां, पृथिव्याः अग्नेः ऋग्वेदस्य ब्रह्मणः छन्दसां इत्यादि चतुर्मुखस्य ब्रह्मणः हेरुकादीनां वटुकादीनां आत्मनो० सुतस्य मौञ्जीबन्धननिमित्तं पूजनमच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ एताभ्यो देवताभ्यो यवोदकं नमः उदक० ॥ आज्ञा मे दीयतां नाथ० ॥ आपन्नोऽस्मि शरण्योऽसि० ॥ ईशानविष्णु० । कलिकलुष० ॥ आरोग्यं तरणिः० ॥ आयुश्च विद्या च ० ॥ क्षमध्वं मम क्षेत्रेशाः ० ॥ आह्वानं नैव० ॥

यदक्षरपद० ॥ उभाभ्यां जानुभ्यां० ॥ नमो ब्रह्मणे० ३ तर्पणम् ॥ यज्ञेनयज्ञमयजन्त० ॥ उत्सृजामहेध्यायान्प्रतिविश्वसन्तु च्छन्दांसि कस्त्वा विमुञ्चतु इति पठेत् — ऋषिविसर्जनं ॥ कस्त्वा विमुञ्चति सत्वा विमुञ्चतु विष्णुस्त्वा विमुञ्चत्वऽस्य यज्ञस्यध्यै मह्यं सन्नत्या अध्ययनायामुष्मै कामायायुषे त्वा, प्राणाय त्वा, व्यानाय त्वा, ऽपानाय त्वा, व्युष्ट्यै त्वा, रय्यै त्वा, राधसे त्वा, पोषाय त्वा, घोषाय त्वा, राद्घोषाय त्वा, प्रतिष्ठित्यै त्वेति ॥ ब्रह्मविसर्जनं ॥ सोमानं स्वरणङ्कृणुहि ब्रह्मणस्पते कक्षीवन्तं य औषजः इति ॥ उदकलशमुपनिधाय उत्तिष्ठ ब्रह्मणस्पते० इत्यादि ॥ बोधश्चमेति स्वस्त्ययनं वाचयति० ॥ मन्त्रार्थाः सफलाः सन्तु० ॥ ततः सर्पिष्मदन्नं ब्रह्मणान्भोजयेत् ॥ अथ पुनः शुद्धीभूय- आब्रह्मन् इति पठित्वाऽऽशीर्वादेन सह पुष्पाणि गृहीत्वा यज्ञच्छिद्रमित्यादि - प्रार्थयेत् ॥ यज्ञच्छिद्रं तपश्छिद्रं यच्छिद्रं यजने मम । अच्छिद्रमस्तु तत्सर्वं भास्करस्य प्रसादतः ॥ सत्याः

सन्तु यजमानस्य कामाः इत्यग्नौ पुष्पम् ॥ राजस्वस्ति० सर्वे भवंतु० राज्ञां शिवं चास्तु० ॥ नन्दन्तुसाधकाः० ॥ इति प्रार्थना ॥

सम्पूर्णोऽयं गर्भाधानादि संस्कार विधिः ॥



केचिच्चेत्स्युः क्वचन विषये बुद्धिमान्द्यात्प्रमादाः
क्षन्तव्यास्तेऽशरणशरणैर्बुद्धिमद्भिः क्षमाढ्यैः ।
जन्तोर्बुद्धिर्ह्यखिलविषयेष्वस्वतन्त्रा परात्मा –
धीना, तस्माद्भवत शरणं सद्वरा भूसुरा ! मे ॥

अपिच – धीचोदको यद्भगवान्परात्मा तद्दर्शितं वस्तु नरोऽनुपश्येत् ।
तस्मादुपालम्भपरो ऽस्वतन्त्रे, वाच्यः स्वयं स्याद्विदुषां समाजे ॥

वर्हावतंसित चारुकुन्तलधरं श्रीचन्दनालंकृतं ।
भास्वत्पूर्णसुधांशुमञ्जुवदनं वंशीधरं सुन्दरम् ॥
नानारत्नविभूषणैश्च सुमनःस्रग्भिर्मनोहारिणं ।
राधाखेलन तत्परं प्रभुवरं श्रीकृष्णचन्द्रं श्रये ॥

---

इति निवेदयति काश्मीरस्थ राजकीय पाठशाला
मुख्याध्यापको नाथराम शास्त्री